* ॐ नमः शिवाय *

# फक्किकामर्मविवृतिः

दरभङ्गाजिलान्तर्गत–ठाढ़ीग्रामनिवासि–
झोपनामक–हरिशङ्करशर्म-
संगृहीता

## सिद्धान्तकौमुद्याख्या

मुरादाबादनिवासि–पण्डित–रामस्वरूपशर्मणा
स्वीये "सनातनधर्ममुद्रणालये"
संशोध्य मुद्रिता।



संग्रहकर्त्रा मुद्रापयित्वा प्रकाशिता

अस्याः पुनर्मुद्रणाद्यधिकारश्च
संग्रहीत्रा स्वायत्तीकृतः।

द्वितीयावृत्तौ १००० | १९१६ | मूल्यं सपाद-रूप्यकम् १)

मिलनेका पता–पं० … झा विपणिविद्यालय

* श्रीशिवाय नमः *

# फक्किकामर्मविवृतिः

## सिद्धान्तकौमुदीव्याख्या

---

### श्रीहरिशङ्करशर्म्मप्रणीता

मुरादाबाद-नगरे

सनातनधर्म मुद्रणालये स्वद्रव्यव्ययेन मुद्रापिता

---

एतस्याः पुनर्मुद्रणं स्वाधीनमेव

---

मुद्रकः—रामस्वरूप शर्मा । प्रकाशकः—श्रीहरिशङ्करशर्मा

द्वितीयवारे पुस्तकसंख्या १०००

छात्रार्थं मूल्यमेकरूप्यकम्

१९३६ ईशाब्दाः

# भूमिका

आसीच्च पदवाक्यप्रमाणपारावारपारीणमहामहोपाध्यायः श्रीमद्भट्टोजिदीक्षितः। तेन च सकलशास्त्रज्ञानसम्पादिका पदे पदे गूढार्थसम्वलिता, वैयाकरणसिद्धान्तकौमुदी विरचिता, तस्याश्चाल्पधियामपि पाठकानां सुखाद्विचक्षणकारिणी कापि व्याख्या केनापि न कृता, तेन च दिने दिने परिक्षीणैव वैयाकरणसिद्धांतपद्धतिस्तामाकलय्य प्राचीननवीनमतप्रकटनपूर्वकं सकलशास्त्रार्थशेषभूतं सुकुमारबुद्धीनामपि प्रमोदकरमेतद्ग्रन्थमतिलघुभूतम्व्यरचयम्। भो भो! अस्मदार्य्यकुलतिलकाङ्कुराः। द्विजकुलालङ्काराः! "अपि पौरुषमादेयं शास्त्रञ्चेद्युक्तिबोधकम्। अन्यत्त्वार्षमपि त्याज्यम्भाव्यं न्यायैकसेविना॥ युक्तियुक्तमुपादेयम्वचनम्बालकादपि। अन्यत् तृणमिव त्याज्यमप्युक्तम्परमेष्ठिना॥" इत्यालोच्य एतस्य पठनपाठनक्रमेण मत्परिश्रमं सफलयन्त्वित्यभ्यर्थये इत्यलम्पल्लवितेन।

ग्रन्थकर्ता

॥ ॐ नमः शिवाय ॥

# फक्किकामर्मविवृतिः

ऊर्ध्वोत्क्षिप्तकरोच्छलद्गिरिसुतापादोच्चलन्नूपुर-
श्रेकाडम्बरसंचलद्रुतवहप्रश्च्योतितध्वान्तमुक् ॥
भालप्रोच्छलदीषदच्छकणिकास्वच्छाम्बरस्तांडवः ।
श्रीदेवस्य महेश्वरस्य वितनोत्वस्मत्कृतेः पूर्णताम् १

संगृह्यार्थं बहुग्रन्थात्फक्किकार्थप्रकाशकात् ।
छात्राणामुपकारार्थं कृतिः स्यात्सफला मम ॥२॥

मतिवैकल्यतो वापि लिपिमुद्रणतोऽपि वा ।
दूषणम्भूषणमिव शीलयन्तु च सज्जनाः ॥ ३ ॥

समाप्तिकामो मङ्गलमाचरेदिति श्रुतिबोधितकर्तव्यताकत्वेन पूर्वाचार्यपरिशीलितत्वेन च मङ्गलस्य कर्त्तव्यतामवधार्य शिष्यादिभ्यस्तदुपदिशन् साक्षादीश्वररूपिणम्मुनित्रयमेतद्ग्रन्थप्रवर्तकम्पाणिनिकात्यायनपतञ्जलिनामानन्नमन् चिकीर्षितम्प्रतिजानीते (मुनित्रयमिति) नचात्र नमःस्वस्तीति चतुर्थ्या विशेषविहितत्वेन कथन्द्वितीयेति वाच्यम् उपपदविभक्तेः कारकविभक्तिर्बलीयसीति भाष्याद् द्वितीयाया एव प्राबल्यात्, पदमुद्दिश्य विधीयमाना विभक्तिरुपपदविभक्तिः क्रियाजनकार्थकविभक्तिः कारकविभक्तिरिति बोध्यम् । वस्तुतस्तु नमःस्वस्तीति सूत्रेऽर्थवत्परिभाषोपस्थितौ अर्थवन्नमःशब्दयोगे चतुर्थीविधानादत्र नमःशब्दस्यार्थवत्त्वाभावान्न चतुर्थी । निपातानां द्योतकत्वेन धातो-

रेव तदर्थत्वात् द्योत्यार्थमादाय सूत्रप्रवृत्तौ तु न मानम् । "अनादरः परिभवः परीभावस्तिरस्क्रियेऽति" कोशबलेन परिभाव्येत्यस्य तिरस्कृत्येत्यर्थः प्राचीनानामुक्तीस्तिरस्कृत्येत्यर्थः। परौ भुवोऽवज्ञाने इति सूत्रेऽवज्ञानग्रहणाज्ञापितधातूनामनेकार्थत्वमिति मते मुनित्रयाणामुक्तीर्विचार्येत्यर्थः । उभयार्थश्च युक्तिकरः । नहि प्राचीनमतखण्डनम्विना स्वकीये ग्रन्थे दृढतरपाण्डित्यप्रकटनम् । नापि भाष्यादिमतावलम्बनम्विनाऽस्मिन्नन्यवैयाकरणानाम्बुद्धिदार्ढ्यम् । केचित्तु 'अनादरः परिभव' इति कोशस्यानुपूर्वीविशिष्टे शक्तिग्राहकत्वेन घञन्ताद्यन्तस्यैवानादरार्थकतया प्रकृते विचारार्थकत्वेन बाधकमित्याहुः । मोदते इति मुदः कौमुदः कुमुदश्चन्द्रः तस्य कौमुदीव चान्द्रिकेवेयं कौमुदी सिद्धांतार्थप्रकाशकत्वसादृश्यात् करिष्यमाणवस्तुनोपि बुद्ध्या प्रत्यक्षीकरणादियमिति प्रत्यक्षविषयकेदंशब्देन निर्देशः । ग्रन्थादौ विषयप्रयोजनाधिकारिसंबन्धरूपाणामनुबन्धचतुष्टयानामावश्यकत्वमिति दर्शयति (वैयाकरणेत्यादिना) तथा च वैयाकरणसिद्धांता विषयास्तज्ज्ञानं प्रयोजनन्तज्जिज्ञासुरधिकारीति सूचितम्, नमस्कारश्च स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलव्यापारःमत्तोऽयमुत्कृष्ट इति ज्ञानोत्तरं करशिरःसंयोगानुकूलव्यापारे नमस्कारव्यवहारात् अत एव नमस्कार्य्यसमीपेऽन्यस्य अस्मादयमुत्कृष्ट इति ज्ञानसत्वेऽपि तादृशव्यापाराभावान्न नमस्कारशब्दप्रयोग इति दिक् । ननु संज्ञा च परिभाषा च विधिर्न्नियम एव च । प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणमिति वृद्धव्यवहारादइउणादीनां कथं सूत्रत्वमिति चेत्कृणु आदिरन्त्येनेत्यनेन सह आदिरकारादिः, अन्त्येनेता णकारेण णकारादिना सहोच्चार्यमाण आद्यन्तादिमानां संज्ञेति एकवाक्यतायां ज्ञापकानामप्येषां संज्ञासूत्रत्वात्ततः । (इति माहेश्वराणीति) महेश्वरादागतानि महेश्वरप्रसादात्पाणिनिना लब्धानीति फलितार्थस्तेन चतुर्दशसूत्राणामनादित्वं सूचितमत एव "नृत्तावसाने नटराजराजो ननाद ढक्कां नव पंच वारम् । उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्"॥ "अत्र सर्वत्र सूत्रेषु अन्त्यं

वर्णाश्चतुर्दश॥ धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये" इति संगच्छते "येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः" इति शिक्षा च संगच्छते । अनुबन्धाश्च महेश्वरकृता एवेत्यपि सूचितम् । कथं णकारादीनां संज्ञार्थत्वमत आह ( एषामन्त्या इत इति ) लपरत्वं वक्ष्यामीति तुल्यास्यसूत्रस्थभाष्यप्रामाण्यात् क्वचिदनन्त्येनापि प्रत्याहार इत्यस्योपपत्तये आह (लणसूत्र इति) तेन रप्रत्याहारसिद्धिस्तत्फलमुरण्रपर इत्यत्र लपरत्वसिद्धिरतो ऌतेत्यत्र लकारोच्चारणाद्रप्रत्याहारस्यानित्यत्वं तेन रदाभ्यामित्यत्र न दोषः । यणवटितसूत्रे य इति प्रत्याहाराश्रयणे मात्रागौरवादित्याशयः(उच्चारणार्थ इति) नाचम्बिना व्यञ्जनस्योच्चारणमपि भवतीति भाष्यात्। एषा हि आचार्यस्य शैली लक्ष्यते यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति अचोऽन्तु हलो हल्ष्विति भाष्यादच्प्रत्याहारे हलां ग्रहणन्न हल्प्रत्याहारेऽचां ग्रहणन्न । ब्राह्मणाः ब्राह्मणैः सह भोज्यन्ते क्षत्रियाः क्षत्रियैः सहेति कैयटाच्च।ननु वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वादादिरन्त्येन सहेतेत्येतद्वाक्यार्थबोधम्बिना हल्पदार्थाप्रसिद्धौ हलन्त्यमित्येतद्वाक्यार्थबोधासम्भवः । आदिरन्त्येन सहेतेत्येतद्वाक्यार्थबोधे हलन्त्यमित्येतद्वाक्यार्थबोधसहकृतेत्पदार्थज्ञानस्य कारणत्वात् एवञ्चोभयोर्वाक्यार्थबोधे उभयोर्वाक्यार्थबोधस्यापेक्षितत्वेन परस्परापेक्षत्वरूपान्योऽन्याश्रयात् अन्योन्याश्रये च कार्यासम्भवः यथा नौर्नावि बद्धा नेतरत्राणाय भवतीत्यत आवृत्त्या तं परिहरति ( हलन्त्यमिति ) हलः अन्त्यमिति सम्बन्धषष्ठ्या समासस्तेन हल्सूत्रान्त्यमित्यर्थः । द्वितीये राहोः शिर इतिवत्षष्ठ्या समासे हल्रूपान्त्यमिति बोधः । एवञ्च पूर्वहलन्त्यमित्येतद्वाक्यार्थसहकृतेत्पदार्थज्ञानसहकृतादिरन्त्येन सहेतेत्येतद्वाक्यार्थबोधाधीनहल्प्रत्याहारसिद्ध्युत्तरं हलन्त्यमिति वाक्यार्थबोधे नान्योऽन्याश्रयदोषलेशोऽपि । आवृत्तौ प्रमाणन्तु न विभक्ताविति सूत्रमन्यथा इत्संज्ञाभावादेवाप्राप्तौ किं सूत्रेणेति दिक् ॥ ननु [illegible] आह ( [illegible]-

हारेष्वितामित्यादि ) अनुनासिक इति न चेत्त्वविधानसामर्थ्यान्न यणिति वाच्यम् साक्षाच्छास्त्रबाधकल्पनापेक्षया इत्त्वविधानस्यान्युक्तार्थे ज्ञापकत्वकल्पने लाघवात्। न चानुनासिक इत्यत्र इको सवर्णे इति प्रकृतिभावाद्यण् शङ्केव नोदितेति वाच्यन्तस्य वैकल्पिकत्वात्। उक्तज्ञापनात्प्राक् ककारस्याच्त्वेन तस्मिन्भत्वाच्चेति दिक् ॥ ननु प्रत्याहारेष्वनुबन्धानां कथमज्ग्रहणेषु ग्रहणन्नेति वार्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धत्वात्प्रत्याहारेष्वितामित्यनुपपन्नमत आह ( आदिरन्त्येनेतीति ) तथा च वार्तिके तादर्थ्यात्ताच्छब्द्यमिति बोध्यमेवञ्च प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रासौ प्रत्याहार इति योगरूढिबलादस्यैव ग्रहणं कृत्रिमाकृत्रिमयोर्मध्ये कृत्रिमस्यैव ग्रहणमिति सिद्धान्ताच्चेति भावः ( आ य इति ) निपाता आद्युदात्ता इत्याकार उदात्तः। यच्छब्दस्य फिषोन्तोदात्त इत्यन्तोदात्तत्वं जसः सुप्त्वात्सुप्पितावनुदात्तावित्यनुदात्तत्वन्तदेकादेशस्य एकादेश उदात्तेनोदात्त इत्युदात्तत्वम् । ( अर्वाङिति ) अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमर्वाङिति तस्य फिषोन्तोदात्त इत्यन्तोदात्तत्वम् शेषस्यानुदात्तपदमेकवर्जमित्यनुदात्तत्वम् । अर्वन्तमञ्चतीति विग्रहे कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । ( अतन्त्रमिति ) व्याकरणशास्त्रसंकेतितरूपेणार्थबोधकमित्यर्थः किन्तु अर्द्धमात्रारूपार्थकमित्यर्थस्तेन दीर्घादिष्वपि अर्द्धमात्रैवोदात्तेति शेखरकारः । एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरस्तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वेति मतमुपलभ्य अर्द्धमुदात्तमिति वदता मनोरमाकारेण दीर्घेष्वर्द्धमेवोदात्तमिति स्वीकृतम्, एकाक्षरेत्यादेः पूर्वयोरुदात्तानुदात्तयोरेकत्र समावेशे स्वरितो भवति तस्य स्वरितस्य स्वतन्त्रोदात्तापेक्षया उदात्ततरार्द्धमात्रा बोध्या अथवार्द्धमेवोदात्तम्बोध्यमित्यर्थात् । ह्रस्वस्वरितमुदाहरति ( क्वेति ) अत्र किमोत् क्वातीति क्वादेशो तित्स्वरितमिति स्वरितत्वम् ( प इति ) अनुदात्तं सर्वमपादादावित्यनुदात्तत्वम् दीर्घस्वरितमुदाहरति (रथानामिति) येषां इति स्वरिते। यानुदात्ते पदादावित्येकारः

स्वरितः स्वरितपरमुदाहरति ( शतचक्रमित्यादि ) उदात्तस्वरितयोरिति स्वरितः, यच्छन्दः फिषोन्तोदात्तस्तदेकादेशश्च वा स्वरितः ( अस्य चाष्टाध्यायीमित्यादि ) तेन दण्डाढकमित्यादौ दीर्घसिद्धिः । अन्यथा सावर्ण्याभावान्न स्यात् । पूर्वत्रासिद्धमित्यस्याधिकारत्वे फलमाह ( त्रिपाद्यामपीति ) अन्यथा सपादसप्ताध्याय्या एव पूर्वपदेन ग्रहणात् गोधुङ्मानित्यत्र घत्वजश्त्वानुनासिकेषु परत्वात्कृतेषु भष्भावानापत्ते-रथवा परत्वाद् घत्वे ततो झय इत्यनेन वत्वापत्तेः । अधिकारत्वे तु त्रिपाद्यामपि पूर्वे प्राप्ते परस्यासिद्धत्वाद्विप्रतिषेधशास्त्राप्राप्तौ सकलेष्टसिद्धिरित्यूह्यम्, अनेन कार्यासिद्धत्वे तु असू अमी इत्यादौ परत्वान्मुत्वे जाते ततः सापादिकपररूपदृष्ट्याऽसिद्धत्वेपि देवदत्तहन्तृहतन्यायेनाकाराभावेन पररूपानापत्तेः शास्त्रासिद्धत्वे तु शास्त्र एवाभावारोपात्पूर्वं जातमपि जातत्वबुद्ध्यभावाल्लक्ष्यसिद्धिः कार्य्येऽध्यादेशो एव न हि भ्रमेण शुक्तौ रजतबुद्ध्या प्रवृत्तौ शुक्तिं न विन्दतीति दिक् ( अत्राण् परेणेति ) अत्र ऋृत उदित्यत्र तपरकरणम्प्रमाणम् । ( ऐ औजिति सूत्रारम्भसामर्थ्यादिति)अयं भावः एङोयायावाव इति न्यासे स्थानेन्तरतमपरिभाषया संवृतावर्णकस्य संवृतावर्णकः विवृतावर्णकस्य विवृतावर्णक एव भविष्यतीति न दोषः, यथासंख्येन वेति केचित् ऐज्विधायके न य्वाभ्यामित्यत्रापि ऐ औ इति पठनीयौ न च वृद्धिरादेङिति पाठे एकारौकारयोरपि वृद्धिसंज्ञायां दोषापत्तिरिति वाच्यम्,सवर्णसंज्ञावादिमत इव मन्मतेपि दोषसमाधानयोः समत्वात्। एवञ्च गुणवृद्धिसंज्ञाविधायके प्रत्याहारद्वयाकरणलाघवमत्र बोध्यम् ननु हकाराकारयोः सवर्णसंज्ञायां सवर्णग्राहकतावलेन हकारेणाकारग्रहणापत्तौ विश्वपाभिरित्यत्र हो ढ इति ढत्वापत्तिः, नाज्झलाविति निषेधस्तु अत्तरसमाम्नायपठितह्रस्वस्यैव तस्यैवाच्पदेन ग्रहणादच्पदे ग्रहणकशास्त्रस्य तु न प्राप्तिः नाज्झलावित्यतः प्रागेव तस्यानिष्पत्तेः, अत एव भाष्ये "प्रथमं वर्णानामुपदेशस्तदुत्तरमित्संज्ञा तदुत्तरमादिरन्त्येनेति प्रत्याहारसिद्धिस्तदुत्तरकाला सवर्णसंज्ञा तदुत्तरकालमणुदिति"एतेन सर्वेण समुदितेन अन्यत्र सवर्णानां ग्रहणम्भवति न स्वस्मिन्नापि स्वांगे न चाप्येकारः शकारं गृह्णातीति नाज्झलाविति

सूत्रे उक्तमित्याशयकशंकां परिहरति (नाज्झलावित्यादिना ) प्रश्लेषा-दिति अत्र कालसमयवेलास्वित्यादिप्रश्लेषे मानमन्यथा हकारवत् आकारस्याप्यणत्वात्सवर्णत्वापत्तेः, न चैवमपि प्लुतस्य ग्रहणं स्यादेवेति वाच्यमाकारात्परः प्लुतोपि प्रश्लिष्यते तेन हे पिपासो यियासो' इति भाष्यप्रयोगः संगच्छते इति दिक् । ( इति संज्ञाप्रकरणमिति ) अर्थात्संधिकार्योपयोगिनीनां प्रथमाध्यायस्थानां संज्ञानां प्रकरणं समाप्तमित्यर्थः ॥ * ॥ * ॥ * ॥

ननु तस्मादित्युत्तरस्यादेरिति न्यासेनैव सिद्धे किमर्थं योग-विभाग आदेरित्यत्र परग्रहणं चेत्याशङ्क्य समाधत्ते (अष्टाभ्य औशि-त्यादाविति ) अयम्भावः,अष्टौ इत्यत्र अष्टाभ्य औशिति जस औशादेशे सिद्धांते आदेः परस्येत्येतं बाधित्वा अनेकाल्शित्सर्वस्येति सर्वादेशः सिद्ध्यति । अधुना अनेकालित्यतस्तस्मादित्युत्तरस्यादेरित्यस्य परत्वेन आदेरादेशापत्तौ जसः सकारस्य रुत्वे विसर्गे च अष्टौरिति रूपं स्या-दिति शिद्ग्रहणस्य तु इदम इशित्यत्र सर्वादेशविधानेन चारितार्थ्यम् न चानेकालित्यतः पूर्वमादेः परस्येति देशे तस्मादित्युत्तरस्यादेरिति न्यासे न दोष इति वाच्यम्, तस्मादित्युत्तरस्यैव आदेरित्यंशस्याप्या-गमविषये प्रवृत्त्यापत्तौ देवासः ब्राह्मणास इत्यत्र आज्जसेरसुगित्यनेन आद्यन्तौ टकिताविति सहकृतेन आदेरकारस्यान्तावयवे सुगागमे एक-स्य सकारस्य संयोगांतलोपे पूर्वस्य रुत्वे विसर्गे च देवा ब्राह्मणा इत्या-पत्तेः न चाज्जसेरसुडिति न्यासे न दोष इति वाच्यम् अश्ववृषक्षीरलवण-वर्णानामात्मप्रीतौ क्यचीत्यनेनासुडापत्तौ अश्वस्यतीत्यादिरूपासिद्धेः अत्र क्य च इति करणे क्यचि चेत्यनेनेत्वापत्तेश्च अत्र क्यच्यसुगिति करणे बहुलाघवाभाव इति दिक् ( इति परिभाषाप्रकरणम् ) ॥ * ॥

प्रत्याहारवाच्यानां स्वग्राच्ये दीर्घादौ लक्षणाया इक्पदेन षट्पदैर्यण्-पदेन सप्तानां च ग्रहणात् यथासंख्याभावः न चादिरन्त्येनेति सूत्रसह-कृतेक्पदशक्तिजन्यबोधकालीनवर्णचतुष्टयानां यथासंख्यसंभव एवेति वाच्यम्, ऋलृवर्णयोः सावर्ण्यसत्वेन प्रत्येकं त्रिंशत उपस्थितौ ऋ-

वर्णस्य स्थाने लकारस्य लवर्णस्य स्थाने रेफस्य च प्रसङ्गादित्यत स्थानेन्तरतमसूत्रेणैवेष्टसिद्धिरत आह (स्थानत आंतर्यादिति ) प्रत्याहारवाच्यानां स्ववाच्ये लक्षणायां दीर्घाज्जसि च त्वादिभ्य इत्यादिनिर्देशश्च ज्ञापक इति बोध्यम्। वस्तुतस्तु यणो विधीयमानत्वेन भाव्यमानेन सवर्णानां ग्रहणान्नेति सवर्णग्रहणानापत्तेः गुणानामभेदकत्वमिति पक्षेपि न सवर्णग्राहकत्वम् भाव्यमानेति परिभाषाया अणुदित् सूत्रेण प्राप्तस्य जातिग्रहणप्राप्तस्य गुणाभेदत्वप्राप्तस्य च प्रतिषेधकत्वात् (द्वित्वविकल्पाच्चत्वारि रूपाणीति) न च सकारविसर्गाणां द्वित्वेन रूपाधिक्यात्कथं चत्वारीति वाच्यम्, न ह्ययं चत्वार्येवेति ग्रमः किन्तु धकारयकारयोर्द्वित्वविकल्पाच्चत्वारीति न चांतरङ्गे यणि कर्तव्ये बहिरङ्गस्य यणोसिद्धत्वात्कथं धस्य यस्य च द्वित्वमिति वाच्यम्, त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तेः कार्यकालपक्षमाश्रित्य दोषोद्भावनन्तु न युक्तिकरम्, एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्य भाष्ये क्वाप्यनुपन्यासात् अत एव यणो मय इति वार्त्तिकस्य दध्यत्रेत्युदाहरणं भाष्ये दत्तमिति प्राचीनानुयायिन आहुः। नवीनास्तु कार्यकालपक्षेपि त्रिपाद्यामंतरङ्गपरिभाषा न प्रवर्तते त्रिपाद्या असिद्धत्वात् अस्याश्च वाह ऊठ् सूत्रस्थोठ्ग्रहणज्ञापितत्वेन सापादिकत्वात् अत एव तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति वार्तिकं संगच्छते अन्यथांतरङ्गसंयोगादिलोपादिकर्तव्ये बहिरङ्गयणादेरसिद्धत्वादेव चक्रय्त्र निगाल्यते मापवपनीत्यादेः सिद्धौ वार्त्तिकस्य वैयर्थ्यं स्पष्टमेवेत्याहुरिति दिक् (सुध्युपास्य इति) न भूसुधियोरिति निषेधस्तु अनन्तरस्येति न्यायेन परनेकाच ओः सुपीत्यनयोरेव। संप्रसारणाच्चेति पूर्वरूपमपि न समानाङ्गग्रहणं कर्तव्यमिति वार्तिकात् संप्रसारणस्थानिकदीर्घस्यासंप्रसारणत्वाच्चेति दिक् (धात्रंश इति) यत्त्वाहुः दीर्घादाचार्याणामित्यत्राचार्य्यग्रहणस्य पूजार्थकत्वेन नित्यनिषेधे न द्वित्वमिति तन्न पूजार्थत्वस्य भाष्येनुक्तत्वात्। अत एव आत्वारथमित्यत्र लृकारस्य द्वित्वविकल्पो भाष्ये उदाहृतः

न च निषेधविकल्पे विधिविकल्पस्य फलितत्वेनानचि चेत्येव सिद्धे किमर्थं सूत्रत्रयमिति वाच्यम्,मतभेदप्राप्तव्यवस्थाबोधनार्थतया सूत्रस्य सार्थकत्वात् अत एव भाष्ये एतन्न वक्तव्यमिति कुत्रापि नोक्तम्।ननु अनचि चेत्यस्य वैकल्पिकत्वाद्रूपद्वयसिद्धे वा हृतजग्धयोरिति व्यर्थमिति चेत् पुत्रस्य क्रान्ते चेद्धृतजग्धयोरेवेति नियमार्थत्वात् तेन पुत्रविची-त्यादौ न द्वित्वम् ( पुत्रहतीति ) प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया हृतशब्दादिपरत्वम्बोध्यम् (आदित्यो देवतेति) अदित्यां जात इत्यर्थे ण्यति पुनर्देवतार्थे ण्यस्तेन आपत्यस्य च तद्धिते नातीति लोपो न, हलो यरां यरि सवर्णे लोप इति न सूत्रितम् आद्धू-नीत् आर्ना इत्यादौ लोपापत्तेः॥ ननु गव्यं नाव्यं गव्यूतिरित्यत्र लोपः शाकल्यस्य हलि सर्वेषामिति वा लोपः स्यादत आह(वान्त इत्यत्रेति) ननु गव्यमित्यादौ यकारे भत्वात् पदत्वाभावादेव लोपाप्राप्ते किञ्च हलि सर्वेषामित्यत्र फलाभावाद्धकारानुवृत्तौ लोपाप्राप्तेरत आह (छकाराद्वेति ) केचित्तु गोशब्दादिच्छायां क्यचि गव्यतीत्यत्र लोपा-भावाय सूत्रेपि प्रश्लेष आवश्यक इत्याहुस्तन्न, नः क्ये इति नियमेनापदत्वात् (लोपो व्योरिति) न चात्र सूत्रे वकारस्य भाष्ये प्रत्याख्यानात्कथं लोप इति वाच्यम् लौकिकोदाहरणविषयत्वेन प्रत्याख्यानेपि सौत्र-प्रयोगार्थन्तस्यावश्यकत्वात् अत एव भाष्ये लुप्तनिर्दिष्टो वकार इत्युक्तम् ननु विष्णावे इत्यादौ वलोपापत्तिः गव्यूतावुच्चारणस्य चारिताथ्यादिति चेन्न छन्दसि दृष्टानुविधानात् गव्यूतौ लोपाप्राप्तेरेव विष्णावे इत्यादौ उच्चारणसामर्थ्याल्लोपाभावात् अध्वपरिमाणेपि संज्ञात्वभङ्गापत्तेर्वे-लोपो न, अत एव रघुनाथेत्यत्र न णत्वमेवं च प्रश्लेषे न फलमिति बोधनाय वेत्युक्तमिति दिक् ॥ ( तन्निमित्तस्यैवेति किमिति ) अवयवद्वारा समुदाये प्रश्नः सूत्रमेव किमर्थमिति भावः लव्यमित्यत्र वान्त इत्येव सिद्धेः ( ओयत इति ) आङ्पूर्वकाद्वेञः कर्मणि लट् यक् संप्रसारणे रूपम् ननु पदद्वयसम्बन्धिवर्णद्वयापेक्षस्य बहिरङ्गत्वमिति प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्येण गुणस्यासिद्ध-

स्वान्न दोष इत्याह ( औयत इति ) तस्मादेव धातोः कर्मणि लङि थाकि सम्प्रसारणे आटि वृद्धौ रूपम् प्रकरणशेषस्य दुःखाग्निशेषवत् दुःखाकरत्वेन तत्परिशोधनार्थमाह ( कानि सन्तीत्यादि ) अत्रास्ते श्नसोरल्लोपस्य स्थानिवत्त्वेन यणावादेशौ प्राप्तावित्यर्थः । न पदान्त-सूत्रे पदान्तविधेरिदमेवोदाहरणमिति भावः न च पदसंस्कारपक्षे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्कथं स्थानिवत्त्वशङ्कापीति वाच्यं वाक्यसंस्कारपक्षे येन क्रमेणोपस्थितिस्तेनैव क्रमेण पूर्वोपस्थितिनिमि-त्तकत्वरूपान्तरङ्गत्वेन कार्याणामुत्पत्तौ स्थानिभूतादचः पूर्वस्य विधिः सत्वादिति तत्त्वम्, वस्तुतः पदसंस्कारपक्षे कानि सन्तीत्यादीनां सिद्धत्वेपि तिरश्च इत्यादि तत्फलमिति बोद्धयम्,तत्रान्तर्वर्तिनीम्विभक्ति-माश्रित्य तिरसः पदत्वात् अल्लोपस्य स्थानिवत्त्वे श्चुत्वं न स्यादिति दिक् । (उरण् रपर ) इत्यस्य विधिवाक्यैकवाक्यतया ऋकारलृकार-स्थानिकोण् रपर एव भवतीत्यर्थे नष्टाश्वदग्धरथन्यायेन ऋकारस्यां-तरतम्य आदेशो न एवमकारस्यान्तरतमःस्थानीन एवश्चानांतर्यमेवैत-योरान्तर्यमिति भाष्यबलेन जायमान ऋकारस्थानिकाकारो रपर इति कृष्णर्द्धिरित्यत्रार् इत्याशयेनाह तत्रान्तरतम्यादिति केचित्तु ऋकारलृकारस्थानिकान् रलपरानेवोच्चार्य इदं सूत्रं न कार्यमित्या-हुस्तन्न आपृच्छपृधामीदित्यादौ उभयोरुच्चारणावश्यकत्वेन गौरवाप-त्तेः । यत्तु एकवाक्यताम्विनापि लक्ष्यसिद्धौ तत्करणनिष्फलमेवेति वदन्ति तदसङ्गतम् ऋकारस्य गुणवृद्धी अरारावेवेति भाष्यनियमानुप-पत्तेः किञ्चैकवाक्यताम्विना ऋकारपर्याप्तस्थानिताके तरतीत्यादौ चा-रितार्थ्यस्य उभयस्थानिताके आदेशे सूत्रस्याप्रवृत्त्यापत्ते, एकवाक्यता च आद्गुण इत्यनेन सह यथा अवर्णात्परस्य ऋकाररूपेऽचिति पूर्वपरयोः स्थाने गुणोऽकारो रपरो भवति ॥ केचित्तु तत्रान्तरतम्या-दित्यस्य मूर्द्धस्थानिरेफघटितऋकारस्थाने मूर्द्धस्थानिरेफघटितार् इति स्थानेन्तरतमपरिभाषयैव सिद्धिरित्याशयम्वदन्ति ॥ असति लोप इति द्वित्वाभावे इति शेषः अन्यथा द्वित्वे-सति लोपे द्धियत्वा-

नुपपत्तेः। त्रिधमिति प्रक्रियादयाशायामिति शेषः, न च धकारस्य जश्त्वद्वित्वयोः प्राप्तौ परत्वाज्जश्त्वेन दकारे दस्यैव द्वित्वमिति वाच्यम् पूर्वत्रासिद्धमित्यनेनासिद्धत्वात् न च पूर्वत्रासिद्धीयमद्विर्वचने इति वाच्यम्,यत्र फलविशेषस्तत्रैवास्याः प्रवृत्तिरिति स्वीकारात् ननु अत्र एहीति स्थिते पूर्वान्तवद्भावेनाङ्त्वात् ओमाङोश्चेति पररूपं प्राप्तम् एवमेङि पररूपमित्यनेन तत्प्राप्तम् एत्येधत्यूठ्स्विति वृद्धिः प्राप्ता ततः वृद्धेर्बाधकत्वेन अन्यतरत्वेन व्यापकतामादाय उभयोर्बाधः स्यादत आह ( पुरस्तादित्यादि ) पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायशरीरम् अत्र च मानम् । स्वस्माद्भिन्नो बाधनीय इत्याकांक्षायां पूर्वोपस्थितसूत्रबाधेन चारितार्थ्यसम्भवे पश्चादुपस्थितस्य परस्य बाधे मानाभावरूपम् एवञ्च पूर्वोपस्थित एङि पररूपमिति बाधित्वा चरितार्थायाः वृद्धेः परत्वेन विप्रतिषेधशास्त्रबलादोमाङोश्चेत्यनेन बाध इति न वृद्धिरिति भावः । अत एव "अवेहि तन्मण्डनमिश्रधाम" इति कविप्रयोगः संगच्छते इति दिक् ( मा भवान्प्रेदिधदिति ) चिन्त्यमिदं इणीकारादौ प्रतिषेध इति वार्तिके एधतेरनुपादानात् एत्येत्येतेरेव विशेषणम् न त्वेधतेरव्यभिचारादिति वृत्तिग्रन्थाच्च,यद्यपि एत्येधत्योरेचीति विशेषणमिति भाष्यमस्ति तथापि सम्भवमात्रेण तद्विशेषणमित्याशयात् ॥ ननु प्रोढवानित्यत्रापि ऊढशब्दपरत्वात् प्रादूहोढ इति वृद्धिः कुतो नेत्यत आह (अर्थवदिति ) अयम्भावः वैयाकरणमते वृत्तौ समुदायशक्तिस्वीकाराद्भूतकालिकवहनकर्तृत्वरूपार्थस्य समुदायवृत्तित्वादेकदेशस्योढशब्दस्यानर्थकत्वेन न वृद्धिप्राप्तिः विशिष्टरूपोपादानविषयकोक्तपरिभाषया अर्थवदूढशब्दे परे वृद्धिविधानादिति,अत्र मानमाह ( भ्रष्टेति सूत्र इति ) अन्यथा भ्राजिराजः सत्वेन राजबुद्ध्यैव षत्वे सिद्धे किन्तेन, न च राजसाहचर्यात् फणादेरेव भ्राजतेर्ग्रहणमित्यस्य वक्ष्यमाणत्वेन भ्राजिग्रहणस्य सफलत्वात् कथं ज्ञापकत्वमिति वाच्यम्, भ्रष्टादिसूत्रे राज् इति पाठेन अकारानुबन्धकराज: षत्वविधानाद्भ्राज विभ्रा-

डिति रूपद्वयस्य सौष्ठवात्।तथाहि आत्मनेपदार्थमेकत्राकारानुबन्धपाठः फणादिपठिते ऋकारानुबन्धपाठ इति प्राचीनाः। वस्तुतस्तु पूर्वोत्तरसाहचर्येण धातुसंज्ञकराजतेर्ग्रहणात् भ्राजवटकराजो धातुसंज्ञकत्वाभावात् साहचर्यपरिभाषाया अनित्यत्वेऽपि भ्राजघटकराजशब्दस्य ऋकारानुबन्धकत्वाभावेन भ्राजिग्रहणस्यावश्यकत्वात् ऋकारस्य समुदायानुबन्धकत्वात् एवञ्च परिभाषायां किं ज्ञापकमिति चेच्छृणु शब्दादर्थशब्दोभयोपस्थितौ शब्दस्य शब्देऽर्थे च खण्डशः शक्तिरिति स्वसिद्धान्तमते वा शास्त्रे अर्थस्य शब्दं प्रति विशेषणत्वसम्भवे तत्त्यागे मानाभावात्। अर्थविशिष्टे शब्दे परे इत्याद्यर्थादर्थवत एव ग्रहणात् इयञ्च विशिष्टरूपोपादाने एव अर्थादानुपूर्व्यवच्छिन्नविषयताप्रयोजकपदोपादाने तत्रैवार्थोपस्थितेः न तु वर्णग्रहणे एतच्च भाष्ये स्पष्टम् पाणिनीयमते तु स्वं रूपमिति शास्त्रे स्वशब्देनात्मीयवाचिनाऽर्थो गृह्यते रूपशब्देन स्वरूपम् एवञ्च तदुभयं शब्दस्य संज्ञी तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासंभवात् किन्तु शब्दस्य विशेषणमर्थः एवञ्चार्थविशिष्टः शब्दः संज्ञीति फलितम् तेनैषासिद्धेति ( उभयथर्क्षु इति ) न चात्र पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन गुणस्य बहिरङ्गत्वाद्विसर्गे कर्तव्येऽसिद्धत्वान्न विसर्गप्राप्तिरिति निर्देशकथनासंगतिरिति वाच्यम् विसर्गस्यापि खर्पर एव विधानेन पदद्वयाश्रितत्वस्योभयोः समत्वात् परनिमित्तकत्वमपि तुल्यमेव किञ्च कार्यकालपक्षेऽपि त्रिपाद्यां बहिरङ्गपरिभाषाऽभावस्य पूर्वमुपपादितत्वाच्च लक्ष्यानुरोधात्त्रिपाद्यामपि प्रवर्तते इति तु न लक्षणैकचक्षुषामादरणीयमिति दिक्॥ ननूपसर्गसंज्ञायाः क्रियायोगनिमित्तकत्वेन उपसर्गेणैव धातोराक्षेपात्किमर्थं धाताविती्याशङ्क्य योगविभागेन समाधत्ते उपसर्गेणेति ( अचि किं कुमारी शेत इति ) अयं भावः अचि ग्रहणाभावे इकारशकारयोः सवर्णसंज्ञायां सवर्णग्राहकताबलेन सवर्णपदेन शकारस्यापि ग्रहणात्तस्मिन्परेऽपि दीर्घः स्यात् कृते त्वचि ग्रहणे शकारस्याच्त्वाभावान्न दोषः,सवर्णग्राहकताबलेन तु नाच्त्वम् आदिरन्त्येनेत्दे-

तद्वाक्यार्थबोधकालेऽस्याच्त्वेन आकारादि-चान्तषट्कवर्णा एव तेना-च्पदशक्तिबोधनात् कथन्तर्हि अजादिप्रत्याहारे दीर्घादीनां ग्रहणमिति न भ्रमितव्यं प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणायाः स्वीकारात् जातिग्रहणाद्वा ननु नाज्झलाविति निषेधात् कुमारी शेत इत्यत्र न दोष इत्यत आह ( नाज्झलाविति निषेध इति ) अनिष्पत्तेरिति पूर्वोक्तवा-क्यापरिसमाप्तिन्यायादिति भावः॥(अकोकि दीर्घ इति) यथासंख्यपरि-भाषया दध्यत्रेत्यादौ दोषाभाव इति बोध्यम् ननु संज्ञा शब्दस्यार्द्ध-मात्रिकत्वमित्यभियुक्तव्यवहारात् ऋति सवर्णे लोपो वेति करणे-नैव सिद्धे ऋकारविधाने प्रयोजनाभाव इत्यत आह (ऋति ऋ वेत्यादि त्रिमात्रमिति अत एव भाष्ये अकः सवर्णे दीर्घ इत्यनेनैव रेफद्वयगर्भक ऋकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण रेफद्वयगर्भस्य ऌकारे लकारवत्त्वान्तर्येण विवृतत्वांतर्येण वा तादृशऌकारस्य च सिद्धौ इदं वार्तिकद्वयं प्रत्याख्यातम् एतद्विधेययोः कथमच्त्वमिति न शक्यं अइउण् सूत्रानन्तरं भाष्ये पाठात् (अभितोऽज्भक्तेरिति) अतएव वर्णैक-देशानां वर्णग्रहणेन ग्रहणे प्रातर्ऋतमित्यादौ रोरीति लोपो भाष्ये-नाशङ्कित इति बोध्यम् अन्यत् सर्वंसुगमम् । नन्ववङ्स्फोटायनस्येति सूत्रे धाराप्रवाहन्यायेनातीत्यनुवृत्तिः उत मण्डूकप्लुतिन्यायेनाची-त्यनुवृत्तिरित्याशङ्कां समाधत्ते (अतीति निवृत्तमिति) मण्डूकानुवृत्तौ प्रमाणन्तु इंद्रे चेति सूत्रे आरम्भसामर्थ्यान्नित्यमिदमिति भाष्ये उक्तमन्यथा गवेंद्र इत्यत्रातपरत्वाभावादसङ्गतिः स्यात्, प्राचा तु इंद्रे च नित्यमिति पठितं तदसंगतम्, एतदव्यवहितोत्तरप्लुतप्रगृह्येति सूत्रे नित्यमिति पाठात् भाष्येऽनुपन्यासाश्चेत्यलम् ( व्यवस्थितविभा-षेति)देव आतों गवो ग्राह इति योगे च सद्विधिः मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतमिति भाष्ये परिगणनात् न च व्यवस्थितविभाषयैव इंद्रे नित्यावङि सिद्धे इंद्रे चेति व्यर्थमिति वाच्यम् भाष्योक्तानितिक्ता-नां व्यवस्थितविभाषात्वे प्रमाणाभावात् प्रकृत्यांतःपादमव्यपरे इति सूत्रे नांत इति पाठेपि सर्वत्र विभाषेत्यस्य गोशब्दस्य यद्यत्प्राप्तं तन्ने-त्यर्थेपि सामऊस्याल,प्लुतप्रग्रहेत्यत्र भकारानुवृत्ती अचिप्लुतप्रगृह्यायो

रेव निषेधप्रतीतेरित्यत आह(अथ प्रकृतिभाव इति) ननु इंद्रे चेति सूत्रे वाग्रहणनिवृत्त्यैवास्यनित्यत्वे सिद्धे नित्यग्रहणस्य वैयर्थ्यमित्याशंक्य योगविभागेन समाधत्ते ( नित्यमिति किमिति ) अत्र सूत्रेऽचि- ग्रहणन्तु यत्राचि एतयोः प्रकृतिभावस्तद्ज्निमित्तककार्यस्यैवाभाव इति बोधनार्थन्तेन जानु उ अस्य रुजतीत्यादौ सवर्णदीर्घे जानू अस्य रुजतीति सिद्धिरिति बोध्यम् ( ह्रस्वविधिसामर्थ्यादेवेति ) न च ह्रस्वयणोर्विधानसामर्थ्यात् पर्य्यायसिद्धिरिति वाच्यम् अपदान्तादौ यणश्चारितार्थ्यात् ( न कर्तव्यामिति ) चेन प्रकृतिभावा- पकर्षणेपि चानुकृष्टं नोतरत्र इति परिभाषया ऋत्यक् इत्यत्र ह्रस्वविधानसामर्थ्यस्यावश्यकत्वेनात्रापि तथैवोचितत्वादिति स व्यर्थ एवेति भावः । केचित्तुप्रकृति भावाभावपक्षे चक्रि अत्रेति सिद्धयर्थं चकार इति वदन्ति तदसत् भाष्यानुक्तेः, संहितया अविव- क्षया तत्सिद्धेश्च चक्र्यत्रेत्यत्र संयोगादिककारलोपस्तु न अचः परस्मिन्निति स्थानिवत्त्वात् पूर्वत्रासिद्धे न स्थानिवदिति निषेधस्तु न तस्य दोषः संय्योगादिलोपलत्वणत्वेष्विति निषेधादिति दिक् ॥ सिन्नित्यसमासयोः शाकल्यप्रतिषेधो वक्तव्य इति वार्तिके नित्य- ग्रहणप्रत्याख्यानादत आह ( न समासे इत्यादि ) पश्वोणस्व वक्तव्य इत्यत्र ड्वणोति करणे णिचि निष्पन्ने पार्शमिति न स्यात् पदंसज्ञाविधायकासिति चेत्यकरणे भवदीय इत्यत्र जश्त्वं न स्यादिति दिक् ( वत्किमिति ) अयम्भावः सति हि वद्ग्रहणे क्षत्रिये ब्राह्मण- वद्यामित्यातिदेशे आरोपितब्राह्मणत्ववानयमिति प्रतीतिस्तथैव प्रकृते आरोपितप्लुतत्त्ववादिति बोधे अग्नी इतीत्यत्र अग्नीति प्रेषणे परस्य चेति प्लुते तस्यासिद्धत्वादीदूदेदिति प्रगृह्यत्वे कृते तदाश्रये प्रकृतिभा- वेपि प्लुतस्य श्रवणं भवति तद्ग्रहणाभावे तन्न स्यादिति वद्ग्रहण- मिति, न च वद्ग्रहणसत्वेपि प्लुतवन्नेत्यर्थस्यैव लाभादिति वाच्यम् प्रसज्यप्रतिषेधेन व्याख्याने गौरवात्, भाष्ये प्लुतकार्यन्नेत्यर्थस्तु फलि- तार्थाभिप्रायकः । न च इतिशब्दमात्रसापेक्षाप्लुतवद्भावापेक्षया

वाक्यसापेक्षप्लुतस्य वहिरङ्गासिद्धत्वादग्नी इतीत्यादौ कथमस्य प्रवृत्तिरिति वाच्यम्,शब्दत उभयोः साम्यनिमित्तकत्वात् सूत्रवैयर्थ्या- च्चेति दिक् । ननु स्त्रियां नपुंसके वा अमू आसाते इत्यत्र मुत्वस्यासि- द्धत्वादेकारबुद्ध्या ईदूदेदिति सिद्धेरेतदुदाहरणकथनमसङ्गतमत आह ( रामकृष्णाविति ) तथा च पुँल्लिङ्गे उदाहरणम् मुत्वस्यासिद्धत्वन्तु न आरम्भसामर्थ्यादिति बोध्यम् ( षत्वस्यासिद्धत्वादिति ) अयम्भा- वः यतोऽयं त्रिपाद्यां विधीयतेऽतोऽनुस्वारदृष्ट्या षत्वस्यासिद्धत्वाद्- ल्परत्वाभावान्नानुस्वारः, अन्यथा इको यणचीत्यनन्तरमस्य पाठेन यणश्चानुवर्त्तनेनैव सिद्धे षत्वविधानं व्यर्थं स्यादिति, वस्तुतस्तु त्रि- पाद्यां पाठे प्रत्यङ्ङ्वास्ते प्रत्यङ्ङ्ग्रकरोदित्यादौ षत्वस्यासिद्ध- त्वेन उकारेऽचि ङमो ह्रस्वादिति ङमुडागमः सिद्ध्यति, अधुना तन्न स्यादिति षत्वविधानमिति बोध्यम् ( अर्थग्रहणं किमिति ) ननु प्रत्ययग्रहणपरिभाषया तदन्तविधौ ईदूदन्तं सप्तम्यन्तमित्यर्थेनैव प्रत्ययलक्षणेन सप्तम्यन्तत्वान्सोमो गौरीत्यादौ प्रगृह्यत्वे सिद्धेऽर्थ- ग्रहणं व्यर्थम् न च सुप्तिङन्तमित्यन्तग्रहणज्ञापितया संज्ञाविधौ प्रत्य- यग्रहणे तदंतग्रहणन्नास्तीति परिभाषया तदंतविधिनिषेधे सोमो गौरीत्यादौ दोष एवेति वाच्यम् तथा सति सूत्रस्यैव वैयर्थ्येन संज्ञा- विधावित्यस्याप्रवृत्तेः, न च ययीपपीत्यादौ परादिवद्भावेन दीर्घैका- देशस्य सप्तमीत्वात्तत्रास्य चारितार्थ्यमिति वाच्यम्, तत्रापि सरसी यदीति भाष्येण ययीत्यादेरनभिधानात्, किञ्च ईकारांशे चारितार्थ्येऽपि ऊकारांशे व्यर्थस्य सद्भावात्, किञ्च ईदूतौ सप्तमी प्रगृह्यम् अदसः एच्च द्विवचनमिति लघुभूतन्यासेनैव सिद्धे गुरुभूतन्यासकरणेन संज्ञाविधावित्यस्याप्रवृत्तिसूचनादिति चेत्तदेव व्यर्थं सञ्ज्ञापयति सप्तम्यर्थमात्रे पर्यवसन्नं यत्तदेव प्रगृह्यमिति तेन वाप्यामश्वो वाप्यश्व इत्यत्र संज्ञायामिति समासेऽजहत्स्वार्थावृत्तिरिति पक्षे उत्तरपदार्थ- स्य पूर्वपदार्थ एव क्रोडीकारात्, वापीनिष्ठाधिकरणतानिरूपिताधेय- तावानश्व इति बोधेन प्रगृह्यत्वं सप्तम्यर्थेऽधिकरणे आधेयतायाः प्रवे

शात् सप्तम्यर्थमात्रवृत्तित्वाभावात् जहत्स्वार्थावृत्तिरिति पक्षे तु प्राप्तिशङ्क्यैव नेति बोध्यम् अल्पाच्तरमिति सौत्रप्रयोगेण कथमनच्त्वमिति भाष्यप्रयोगेण च वृत्तिघटकाच्पदं कृत्वादीनामभावकल्पनात् इत्याशयेनाह ( इत्यच्सन्धिरिति ) ॥ * ॥ इति स्वरसंधिप्रकरणम् ॥ * ॥

(ष्टोः किमिति) षकारस्य पदान्ते जश्त्वविधानात्तत्र ष्टुत्वनिषेध इष्ट एवेति प्रष्टुराकूतम् ( सर्पिष्टमामिति ) अत्र ह्रस्वात्तादाविति षत्वस्य जश्त्वं प्रत्यसिद्धत्वाज्जश्त्वाभावे तस्मात्परस्यापि ष्टुत्वनिषेधापत्तेरिति समाधानकर्तुराशयः। न चात्र षत्वस्यासिद्धत्वात्सकारबुद्ध्या जश्त्वं कथन्नेति वाच्यम्,जश्त्वं बाधित्वा रुत्वप्राप्तिः,तं बाधित्वा षत्वप्राप्तिरित्येवं चक्रकापत्तेर्ज्जश्त्वाप्राप्तेरिति दिक् ॥ ननु स्थानेऽन्तरतम उरण्रपर इति संहितया प्रथमान्तपाठे स्थानिनामन्तरतम आदेशो भवतीत्यर्थे चतुर्मुख इत्यत्र रेफरूपस्थानिनोन्यादेशापेक्षया स्थानमात्रसादृश्येनान्तरतम्याण्णाकाररूपानुनासिकः कुतो नेत्याशङ्क्य सप्तम्यन्तपाठेन समाधयति ( स्थानप्रयत्नाभ्यामिति ) अयं भावः सप्तम्यन्तपाठे आदेशानामन्तरतमे स्थानिनि सति आदेशो भवतीत्यर्थे अनुनासिकानां ञमङणनेत्यादेशानां स्थानप्रयत्नाभ्यामन्तरतमे स्थानिनि स्पर्शे चरितार्थस्य विधेः कथं विसदृशे रेफे प्रवृत्तिरिति न च सप्तम्यन्तपाठस्वीकारे दीर्घे यणोऽसिद्धिः स्यात् आदेशानां यवरलानां केनापि सहान्तरतम्याभावेपि मात्राद्वयन्यूनकालिकत्वसादृश्याद्ध्रस्वेकारादौ यण् चरितार्थ्येन दीर्घेऽप्रवृत्तेरिति सप्तम्यन्तपाठस्य दुष्टत्वेन चतुर्मुख इत्यत्रानुनासिकः कुतो नेति वाच्यम् अनुस्वारस्य ययि परसवर्ण इति सूत्रात्सवर्णपदानुवृत्त्या सवर्णोऽनुनासिको भवतीत्यर्थे रेफोष्मणां सवर्णा न सन्तीति भाष्याद्रेफस्थानेनुनासिकाप्राप्तेरिति संक्षेपः(ककुभन्त इति ) प्रकृतिप्रत्ययाविशिष्टस्य यवादिगणे पाठात् सति हि अनुनासिकत्वे झयः परत्वाभावादेव झय इत्यनेन वत्वाप्राप्तौ यवादिपर्युदासार्थं तस्मिन्गणे पाठस्य वैयर्थ्यात्। किञ्च यचि भं तसौ मत्वर्थे इति संहितया पाठे तात्पूर्वं चर्त्वेन दकारप्रश्लेषाद्भत्वेनाप्येतत्समाधातुं

शक्यत्वात् ॥ ( पदस्येति किं गम्यते इति ) यदि च नश्चापदान्तस्येति सूत्रेण अपदान्तस्य मस्य चेदनुस्वारस्तदा झलयेवेति नियम इत्युच्यते तत्रा उत्तरार्थं पदान्तग्रहणमिति बोध्यम् । ( ख्याञादेशे नेति ) अयं भावः चक्षिङो ल्युटि चक्षिङः ख्याञित्यत्र खशादिरयमादेश इति भाष्यात् खशाञादेशे शस्य यो वेति यत्वे तस्यासिद्धत्वाद्झपरत्वाभावेन त्वत्वाप्राप्तेरिति । न च अशनयोश्चेति निषेधात्कथमत्र ख्याञादेश इति वाच्यम् बहुलन्तणि ग्नवधकगाभविचक्षणाजिराद्यर्थमिति वार्तिके बहुलग्रहणान्निषेधाप्राप्तेः । अत एव भाष्ये खशाञादेशस्य पुंख्यानमिति प्रयोजनमुक्तमिति बोध्यम् । (येन नाप्राप्ताविति) येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायशरीरम्, यत्कर्तृकावश्यकप्राप्तौ यो विधिरित्याद्यर्थस्तेन बासःचौममित्यत्र शर्परे विसर्जनीयः विसर्जनीयस्य सः कुप्वोः कःपौ चेत्येतेषां प्राप्तौ उक्तन्यायेन विसर्जनीयस्य स इत्यस्य बाधेपि परत्वाच्छर्परे विसर्जनीय एवेति भावः ॥ इति हल्संधिः ॥

( अप्रत्ययस्य किं, अग्निः करोतीति ) न च स्थानिवत्सूत्रस्यथा विसर्गविधायकस्य त्रैपादिकत्वेनासिद्धत्वात्पदान्तत्वाभावेन प्रत्ययाभावेन च विसर्गषत्वयोर्भावाभावस्योपपादनमशक्यमिति वाच्यम्,इदमेवाप्रत्ययग्रहणं ज्ञापयति षतिघटितातिदेशानां त्रिपाद्यामपि प्रवृत्तिरित्यदोषात्।न च दुःकरोतीत्यत्र प्रत्ययसम्बन्धिविसर्गस्य षत्ववारणायाप्रत्ययग्रहणस्य चारितार्थ्येन कथं ज्ञापकत्वमिति वाच्यम्, तथा सति न पदान्तेति सूत्रे द्विर्वचनादिग्रहणेनोक्तार्थस्य ज्ञापनात्, दृणातीति दुः औणादिको डुर् प्रत्ययः। ननु मातुः कृपेत्यत्र षत्वं कथन्नेत्यत आह ( एकादेशशास्त्रस्येति ) एवञ्च एकादेशशास्त्रं ऋत उदिति तन्निमित्तकत्वं परम्परया विसर्गस्येति भावः। भाष्ये तु एकादेशशास्त्रनिमित्ताविति प्रचुरः पाठः। एकादेशशास्त्रं निमित्तं यस्य तस्मादित्यर्थे न दोषः। न च षत्वतुकोरसिद्ध इत्यनेन षत्वे कर्त्तव्ये एकादेशशास्त्रस्यासिद्धत्वान्न षत्वप्राप्तिरिति वाच्यम्, पदांतपदाद्ययोरेवैकादेशोऽसिद्ध इति

वार्त्तिकेन प्रकृते तदभावात् ॥ ( कृत्वोर्थे किमिति ) न च द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोपि सुजन्त एव गृह्यते इति चतुष्कपाल इत्यत्र न दोष इति वाच्यम्, अनेनैव कृत्वोर्थग्रहणेन साहचर्यपरिभाषाया अनित्यत्वज्ञापनात्, तेन दीधीवेवीटामित्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणमिति। न चैवमपि इदुदुपधस्य सकारस्य यो विसर्ग इत्यर्थो भाष्ये दर्शितः। एवञ्च चतुष्कपाल इत्यत्र दोष एवेति वाच्यम्, विसर्गमादाय उपधात्वाभावेऽपि स्थानिनिमित्तमुपधात्वं ग्राह्यमित्यत्रैव भाष्यतात्पर्यात्, अत एव सूत्रे चतुर्ग्रहणं सार्थकमिति दिक् ॥ ( सामर्थ्यमिह व्यपेक्षा ) न एकार्थीभावः व्यपेक्षा च पृथगर्थानां पदानामाकांक्षावशात्परस्परसम्बन्धरूपा स्वार्थपर्यवसायिनां पदानामेकार्थोपस्थितिजनकत्वमेकार्थीभावत्वम्, अत्र प्रमाणन्तु नित्यं समासे इति सूत्रे समासग्रहणम्, अन्यथा सामर्थ्यानुवृत्त्या एकार्थीभावस्य समासरूपतया समासलाभात्तद्वैयर्थ्यं स्पष्टमेवेति, नित्यग्रहणमप्युक्तार्थे ज्ञापकमिति बोध्यम्। ननु सर्पिष्कुण्डिकेत्यत्र नित्यं समासे इत्यनेन षत्वे सिद्धे कस्कादिगणे पाठो व्यर्थ एवेत्यत आह ( कस्कादिष्विति व्यपेक्षाविरहेपीति)आनय सर्पिः कुंडिका तिष्ठति इत्यत्रेत्यर्थः व्यपेक्षायामिति इदं सर्पिः कुण्डिकाया इत्यत्रेति भावः केचित्तु कस्कादिपाठ उत्तरपदस्थत्वेऽपि परमसर्पिःकुण्डिकाया इत्यत्र षत्वार्थ इत्याहुस्तन्न नित्यं समासे इति सूत्रेऽनुत्तरपदग्रहणवैयर्थ्यात्। अव्युत्पत्तिपक्षे इदुदुपधस्येत्यनेन सिद्धत्वाच्च व्युत्पत्तिपक्षे दोषोपि न सुकरः प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमिति भाष्येण अव्युत्पत्तिपक्षस्यैवोणादिष्वादरात्, अतएव शंख इत्यादौ भायनेयीति न बहुलग्रहणात्समाधानन्तु अगतिकगतिः, सर्पिषा यजुषेत्यादौ बहुलग्रहणादेव षत्वमिति भाष्ये स्थितमिति दिक् ॥ ननु अतः कृकमीत्यत्रतपरकरणात्वेन भास्कर इत्यत्र कथं सत्वमित्यत आह ( कस्कादिषु भास्कर इति ) ॥ इति विसर्गसन्धिः ॥ * ॥ * ॥

( स्वौजसमौडिति ) अयं भावः स्वादिविधायके प्रक्रियालाघवाय

सुग्रहणमपनीय तत्स्थाने रुरेव पाठ्यः पथिमथ्यृभुक्षामादित्यनेन दीर्घोकारविधानात्सौ परे दीर्घो नेति ज्ञापनात् सुपि चेतिकरणेपि राम इत्यादौ न दीर्घशङ्कापीति प्रक्षुराकूतम् । अत्र न्यासे यशोत्रेत्यत्र उत्वम्प्रति रुत्वस्यासिद्धत्वादुत्वानापत्तेः, उत्वविधानन्तु रुविधानवादिमते शिवोऽर्च्य इत्यादौ चारितार्थ्यात्, न चाप्लुताद्ग्रहणसामर्थ्यादुत्वे रुत्वं नासिद्धं अन्यथा सुस्रोता अत्र स्नाहीत्यत्रो त्वाप्राप्तेरिति वाच्यम्, एतु जात३रत्र स्नासि किमित्यादौ अनन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुते अप्लुताद्ग्रहणसार्थक्येन ज्ञापकत्वासंभवात् अत इत्यत्र तपरकरणादेवासिद्धत्वाभावे इदं चिन्त्यमिति केचिदिति संक्षेपः॥ ( यत्वस्यापवाद इति ) उत्सर्गशास्त्राप्रवृत्तिविषये चारितार्थ्ये सति कृते च तस्मिञ्चारितार्थ्यमिति तक्रन्यायमूलक-येननाप्राप्तिन्यायबाधबीजस्य सत्वेन तेन न्यायेन बाधे पुनः स्थानित्वेन यत्वन्नेति, यथा सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानबाधे पुनर्दधिदानं नेति तद्वदिति प्राचीनाः ( शिवोऽर्च्य इति ) न चात्र गुणावसरे प्रथमयोरित्यनेन तद्बाधे तस्य नादिचीति निषेधेपि भ्रष्टावसरन्यायात्कथं गुणप्राप्तिरिति वाच्यम्,तौ सदिति निर्देशेन तन्न्यायस्यात्र शास्त्रेऽनाश्रयणात्,देवदत्तहन्तृहतन्यायस्य तु विषयतैव नास्ति,हते देवदत्ते तद्धन्तरि हतेपि न देवदत्तजीवनम् देवदत्तहननप्रसक्तयज्ञदत्तहननेत्वस्त्येव जीवनम् प्रकृतेपि गुणप्रसक्तिहननोद्यत दीर्घस्य नादिचीति निषेधे गुणप्रसक्तिरस्त्येवेति बोध्यम्(तत्सामर्थ्यादिति)प्रतियोगित्वेन प्लुतस्याश्रयणसामर्थ्यात् तस्य नासिद्धत्वमित्यर्थः। न च पयसि अटति पयो ददातीत्यर्थे आगच्छ हे पयोट आगच्छ हे पयोद इत्यादौ दूराद्धूते चेति प्लुते गुरोरनृत इति च प्लुते तस्यासिद्धत्वाभावेन उत्वं न स्यादिति वाच्यम्, एकपदस्थवर्णसापेक्ष उत्वे कर्तव्ये वाक्यसापेक्षप्लुतस्य बहिरङ्गत्वेनासिद्धत्वादुत्वे प्लुतसिद्धिः । प्रतियोगित्वेन तदाश्रयणसामर्थ्याद्येन नाप्राप्तिन्यायेन सकललक्ष्यप्राप्तिकस्य पूर्वत्रासिद्धमित्यस्यैव बाधः, न बहिरङ्गपरिभाषायास्तस्याः

सकललक्ष्यप्राप्तिकत्वाभावात्, एहि सुस्रोता अत्र स्नाहीत्यादावुत्व-स्यापि पदान्तरसापेक्षत्वेन बहिरङ्गत्वादित्यन्यत्सर्वं स्वयमूहनीयमिति दिक् ॥ ( असन्धिः सौत्र इति ) सूत्रे रान्तं सान्तं चानुकृत्य यत्वे यलोपे च संध्यभावो न्याय्य एवेति ॥ ( देवाः सन्तीति ) ननु विसर्गयत्वयोः प्राप्तौ यत्वस्यासिद्धत्वाद्विसर्ग एवेत्याशयेनाह यद्यपीति ॥ रोरिति समुदायरूपाश्रयणादिति स्थान्यवयवाल्त्व-व्याप्यधर्मावच्छिन्नोद्देश्यताके कार्ये न स्थानिवदित्यर्थे रेफरूप-विसर्गस्थानिवृत्त्यल्त्वव्याप्यधर्मावच्छिन्नोद्देश्यताकयत्वविधेरभावान्न स्थानिवत्त्वमिति भावः । यदि च भो भगो इतिसूत्रस्थभाष्यसंगोपना-यत्ववृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशतावद्धर्मिकारो-पप्रकारीभूतधर्मावच्छिन्नोद्देश्यताककार्येऽपि न स्थानिवदित्युच्यते तदा छन्दःसु पयःस्वित्यादौ दोषः, तत्र रोः सुपीत्यनेन विसर्गः रुत्वन्तु नाल्त्वव्याप्यधर्म इत्यनल्विधावित्यस्याप्राप्तेरित्यलं पल्लवितेन ॥ ( निपातास्तेषामिति ) तेषामपीत्यर्थः, अपिना विभाषाभवद् भगवदघ-वता मोश्चावस्येति वार्तिकनिष्पन्नरान्तग्रहणम्, न चास्य लाक्षणिक-त्वान्न ग्रहणमिति वाच्यम्, भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृ-तिग्रहणेन तस्या अनित्यत्वात् ॥ ननु ढलोपे इत्यत्र सप्तमी-श्रुत्या तस्मिन्निति परिभाषोपस्थित्या सिद्धे पूर्वग्रहणं किमर्थमित्यत आह ( पूर्वग्रहणमित्यादि ) अयं भावः तद्ग्रहणाभावे अलु-गुत्तरपदे इत्यनेनोत्तरपदोपस्थितौ उत्तरपदस्थढकाररेफे परे इत्यर्थे उत्तरपदशब्दस्य समासचरमावयवे रूढत्वेन पुना रमते इत्यादौ दीर्घानापत्तेः । न चैवमणग्रहणवैयर्थ्यमिति वाच्यम् आतृढ आवृढ इत्यादौ चारितार्थ्यात् । सूत्रवैयर्थ्यन्तु न शङ्क्यं लिहो ढौकनं रक्ता-न्निर्गतं लीढौकनं नीरक्तमित्यादौ चारितार्थ्यात् । न चात्र ढलो-पादेस्त्रैपादिकत्वेनासिद्धत्वान्न दीर्घप्रवृत्तिरिति वाच्यम्, सूत्रारम्भ-सामर्थ्येनासिद्धत्वबाधादिति ॥ ढे लोपोऽपदादाविति वार्त्तिकस्या-पीयमेव गतिः ( अजर्घा इति ) गृधेर्यलोपे लङि सेरिलोपे हल्ङ्यादि लोपे रपरे गुणे च । भष्भावजश्त्वे च रु रोरिलोपे ढ्रलोपदीर्घे च भवेदजर्घाः ॥ * ॥ इति स्वादिसन्धिः ॥ * ॥ ॥ * ॥ *

पदलक्षणाया वाचोऽन्वाख्यायकम् वाक्यलक्षणाया वाचोऽर्थलक्षणम्व्याकरणमित्यभियुक्तव्यवहारबलेन अस्मिञ्छास्त्रे पदस्य मुख्यत्वात् पदसंज्ञाविधायके च सुपः प्राथम्यात्तत्सम्पादिकां संज्ञामाह ॥ ( अर्थवदिति ) ननु राजन् ङस् पुरुष सु इत्यादिसमुदायस्य प्रत्ययान्ततदादिभिन्नत्वेन पूर्वेणैव प्रातिपदिकत्वे सिद्धे समासग्रहणम्व्यर्थम्, न च राज्ञः कुमारी राजकुमारीत्यत्र अन्तरङ्गत्वाद्धल्ङ्यादिलोपे अनुपसर्जने स्त्रीप्रत्यये तदादिनियमाभावेन अर्थादतदादावपि तदादित्वारोपेण राजन् ङस् कुमारीत्यस्य प्रत्ययान्ततदादिभिन्नत्वाभावेन पूर्वेणाप्राप्तौ समासग्रहणमावश्यकमिति वाच्यम्। "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते" इति परिभाषया श्रूयमाणसुपा समासे राजन् ङस् कुमारी सु इत्यस्य प्रत्ययान्ततदादिभिन्नत्वेन संज्ञासिद्धेः। न च एष वन्ध्यासुतो यातीत्यादौ वन्ध्यासुतशब्दस्यात्यन्तनिरर्थकस्य प्रातिपदिकत्वाय समासग्रहणमिति वाच्यम्, वैयाकरणमते बौद्धार्थस्य स्वीकारेण तदादाय पूर्वेणैव सिद्धेरिति चेदत आह (पूर्वसूत्रेणेति) पूर्वभागः पदमिति स्वातन्त्र्येण प्रयोगार्हार्थवत्पदमित्यर्थः, तेन गवित्ययमाहेत्याद्यनुकरणे गो इत्यादेः सुबन्तत्वाभावेपि उक्तरूपपदत्वान्नियमफलसिद्धिः, अनुकरणञ्चानितिपरमित्यनेनेतिपरत्वाभावेपि अनुकरणत्वबोधनात् तस्यापि स्वातंत्र्येण प्रयोगार्हत्वम्, पूर्वभागः पदमित्युपलक्षणम्, उत्तरस्तु प्रत्ययी नेत्यपि बोध्यम्, तेन जन्मवानित्यादौ नेति मनोरमायां स्पष्टम्। वस्तु तस्तु पूर्व इत्याद्युक्तः परोऽपि स्वातन्त्र्येण प्रयोगार्थवानेव गृह्यते, तेन पुत्रकाम्यादौ न दोष इत्यलम्, ननु उक्तज्ञापनोत्तरं समासग्रहणस्य चारितार्थ्याभावेन कथं ज्ञापकत्वमिति चेच्छृणु यावताऽविनाऽनुपपत्तिस्तावत् सर्वं ज्ञापयतीति न्यायात्, पूर्वभागपदघटितसंघातातिरिक्तार्थवत एव ग्रहणमिति सङ्कोचेन समासवाक्ययोः संज्ञाया अप्राप्तौ समासग्रहणस्य चारितार्थ्यात् मूलोक्तन्तु न नियमशरीरम्, किन्तु साजात्यप्रदर्शनम्, युक्तञ्चैतत् व्यर्थीभूतशास्त्रीयोद्देश्यतावच्छेदकव्यापकवैयर्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं यद्रूपन्तद्रूपावच्छिन्नातिरिक्तत्वेन वैयर्थ्यप्रयोज-

कशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोच इत्येव नियमाकारः। प्रकृते व्यर्थीभूतसमासग्रहणरूपशास्त्रीयोद्देश्यतावच्छेदकसमासत्व-व्यापकं वैयर्थ्यप्रयोजकार्थवच्छास्त्रीयोद्देश्यतावच्छेदकार्थवत्त्वव्याप्यं यद्रूपं पूर्वभागपदघटितसंघातत्वन्तद्रूपातिरिक्तत्वेन वैयर्थ्यप्रयो-जकशास्त्रीयोद्देश्यतावच्छेदकावाच्छिन्नेऽर्थवति सङ्कोच इति दिक् ॥ ननु रमा गौरीत्यादौ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण-मित्येव सिद्धे ङ्याब्ग्रहणाङ्किमर्थमित्यत आह ( प्रातिपदिकग्रहणे इत्यादि ) ङ्याब्भ्याम्प्राङ् माभूदिति तेनार्य्यका आर्य्यिका लो-हितिका लोहिनिकेति सिद्धम् । अन्यथा स्वार्थिकत्वेनान्तरङ्गत्वा-त्कनि आतः स्थानिकत्वाभावादुदीचामातः स्थाने इतीत्वन्न स्यात् । तथा च प्रत्ययस्थेति नित्यमित्वे आर्य्यिकेत्येकमेव स्यात्। एवं लोहितिकेत्येव स्यादिति । ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम्, तेन युवतिरिति सिद्धम्। अन्यथा युनीतिरिति स्यात्। तद्धितोपि स्त्रीप्रत्ययातिरिक्तपरो व्याख्यानात्, फलन्तु युवतिरित्येव । एवं समासान्तातिरिक्त एव तद्धितो गृह्यते तेन बहुगोमत्का इति सिद्धम्, अन्यथा कपः प्राङ् ङीपि बहुगोमतिकेति स्यादिति प्राची-नाशयः। शेखरे तु अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवोत्पत्ति-रिति स्वीकृत्य लोहिताल्लिङ्गबाधनञ्चेति वार्त्तिकेन लोहितिका लोहिनिकेति रूपद्वयमुक्त्वा आर्य्यिकेत्येकमेवेति प्रतिपादितम् । अत्र युक्तायुक्ते स्वयमूहनीये, वस्तुतस्तु स्वार्थद्रव्यलिङ्गसंख्याकारक-प्रयुक्तकार्याणाङ्कामिकत्वमिति भाष्यादेवोक्तरूपद्वयं सिद्धान्नि-यमफलञ्चिन्त्यमिति मनोरमायां स्थितम् । न च मूलोक्तनियम-न्विनापि उदीचामातः स्थाने यकपूर्वाया इति सूत्रारम्भसाम-र्थ्यादेवोक्तफलसिद्धिरिति वाच्यम्, आर्य्ये वप्रातिकृतेत्यर्थे आर्य्यिके-त्यत्र इवे प्रतिकृताविति कनः पूर्वं टापि तत्र सूत्रस्य चारिता-र्थ्यादिति दिक्। ( रुत्वविसर्गाविति ) अत्र यद्वक्तव्यन्तत्प्राङ् नि-रूपितम्, ननु सम्बुद्धेः प्रत्ययत्वेन यो यः प्रत्ययः स स अङ्गात्परो-

भूतः प्रत्ययत्वात् प्रकृतिविशेषोद्देशेन विहितत्वात्, अङ्गसंज्ञाविधौ निमित्तकत्वाद्वा इत्यनुमानेन येन विना यदनुपपन्नस्तेन तदाक्षिप्यते यथा पीनोऽयन्देवदत्तो दिवा न भुङ्क्ते इत्यत्र पीनत्वानुपपत्त्या रात्रिभोजनाक्षेपस्तद्वदङ्गाक्षेपे येन यदाक्षिप्यते तस्य तत्रैवान्वयस्य औचित्यात् इति, अङ्गात्परा या सम्बुद्धिस्तदवयवो यो हल् स च लुप्यते स च एङ्ह्रस्वाभ्याम्परीभूतश्चेदित्यर्थो युक्तस्तथा च हे कतरदित्यत्र ह्रस्वात्परत्वेन हलो लोपः स्यादित्यतिव्याप्तिः स्यादिति, तत्परिहाराय लक्ष्यानुरोधाच्च अन्यत्राप्यन्वय इत्याशयेनाह (सम्बुद्ध्याक्षिप्तस्येति) न च अङ्गात्परा या सम्बुद्धिस्तदवयवो यो हल् स च लुप्यते स च सम्बुद्धिरेङ्ह्रस्वाभ्यां परीभूता चेदित्यर्थे हे कतरदित्यादौ न दोष इति वाच्यम्, हे कुलमित्यादौ दोषस्य तादवस्थ्यात् । केचित्तु अन्तादिवद्भावेन एकादेशविशिष्टे अङ्गत्वसम्बुद्धित्वयोरतिदेशेनाव्याप्तिदोषपरिहार इति, तन्न उभयत आश्रयणे अन्तादिवद्भावाभावात्,ह्रस्वसम्बुद्ध्योः पौर्वापर्यव्यहाराभावाच्च न चैकदेशविकृतन्यायेन मकारे सम्बुद्धित्वमादाय न दोष इति वाच्यम् अर्द्धविकारे अर्द्धाधिकविकारे वा तन्न्यायाप्रवृत्तेः, न च सिद्धान्तेपि सम्बुद्धित्वस्य सकारमात्रवृत्तित्वेनाल्विधित्वात्स्थानिवत्वाभावेन कथम्मकारे सम्बुद्ध्यवयत्वमिति वाच्यम्, एकवचनत्वस्योकारविशिष्टसुशब्दवृत्तित्वेनाल्विधित्वाभावात् । केचित्तु परादिवद्भावेन असंबुद्धित्वं, कुलिति हलन्ते एकदेशविकृतन्यायेनाङ्गत्वमानीय न दोष इति वदन्तीति प्राचीनमतम् । नवीनास्तु सम्बुद्धेः प्रत्ययत्वेन प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषया तदादेरुपस्थितौ तदादेः परस्यासम्बुद्धेरित्यर्थ एव युक्तः, अङ्गाक्षेपस्तु न सम्भवः सम्बुद्धित्वज्ञाने अङ्गानपेक्षणात् । आक्षिप्तस्य शाब्दबोधेऽन्वये मानाभावाचेत्याशयम्वर्णयन्तीति दिक् ॥ ( हरे विष्णो इत्यत्र ) अपरनिमित्तकत्वेनान्तरङ्गत्वात्सम्बुद्धिलोपे प्रत्ययलक्षणेन पुनर्गुणे

च रूपसिद्धौ एङ्ग्रहणं किमर्थम । न च सेप्रभृतीनां सम्बुद्धिलोपाय तद्ग्रहणमिति वाच्यम्, तथा सति ए इत्येव सिद्धेः। प्रत्याहाराश्रयणाङ्किमर्थमिति प्रष्टुराकूतम्, परत्वादित्यस्योत्तरम्, नित्यत्वादेति सम्यक् परावधिकनित्यस्य वलवत्वात्, नन्वन्तरङ्गत्वेन शङ्कयान्नित्यत्वेन समाधानन्न युक्तिसहन्नित्यादन्तरङ्गस्य वलीयस्त्वादित्यत आह ( येनेति ) येनानवकाशत्वसंग्रहः, एवञ्चानवकाशत्वाद् गुणे लोपो न स्यादित्येङ्ग्रहणम् । न च सिद्धान्तेपि सन्निपातपरिभाषाविरोधात्कथं लोपप्राप्तिरिति वाच्यम, गुणात्सम्बुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात् सन्निपातपरिभाषाया अप्रवृत्तेः । अत एव हे लक्ष्मि इत्यादौ लोपसिद्धिरिति दिक् ॥ ननु पर्य्याणद्धमित्यत्र अड्व्यवायेपि उपसर्गादसमासेपि णोपदेशस्येति णत्वे सिद्धे किमर्थमाङ्ग्रहणमित्यत आह ( पदव्यवायेति ) अनुस्वारोपलक्षणार्थमिति, तेन तृंहणम्बृंहणमित्यादौ णत्वम्, प्रेन्वममित्यादौ न, यथा नक्षत्रन्दृष्ट्वा वाचं विसृजेदिति विधौ नक्षत्रपदस्य कालविशेषोपलक्षकत्वेन सत्यपि दिवा नक्षत्रदर्शने वाङ् न विसृज्यते, एवन्नुमग्रहणस्यानुस्वारोपलक्षकत्वेऽनुस्वाराव्यवधानेन णत्वमिति। (अयोगवाहानामिति)न विद्यते वर्णसमाम्नाये योगो येषान्तेऽयोगाः वाहयन्ति प्रयोगन्निर्वाहयन्ति ते वाहाः अयोगाश्च ते वाहा अयोगवाहाः। भवामि भविष्यामीति भवतेर्लटि लृटि च रूपम्, अत्र तदादिग्रहणाभावे भूधातोरेव मिपो विधानात्तस्यैवाङ्गत्वे अतो दीर्घो यञीति दीर्घो न स्यात्, इदं सूत्रन्तु आमि चिकीर्षामीत्यादौ चरितार्थम्, एवं करोमीत्यादौ गुणार्थमपि तदादिग्रहणम, अतो दीर्घो यञीत्यत्र सूत्रारम्भसामर्थ्यादङ्गाधिकारवाध इति केचित् । (विकरणविशिष्टस्यापीति ) प्रकृतिप्रत्यययोर्मध्ये यः पतितः स विकरण इति । ( विधिरिति किमिति ) अयम्भावः यः प्रत्ययो यस्मात्पर इत्यर्थे स्त्रीशब्दादि यत्प्रत्ययस्य परत्वेनाङ्गत्वापत्तौ स्त्रिया इत्यनेनेयङादेशः स्यात्, इदम् शब्दात्किमिदंभ्याम्वो घः । इति वतुपि वकारस्य घत्वे आयनेयीति इयादेशे इदङ्किमोरीश्कीति इदम ईशादेशे यस्येति

चेनीकारलोपे उगित्वान्ङीपि इयतीति सिद्धम्, न चात्र यस्येति लोपस्याभीयत्वेनासिद्धत्वान्न दोष इति वाच्यम्, यस्येति लोपापेक्षया स्त्रिया इति सूत्रेऽधिकस्य स्त्रीशब्दस्यापेक्षत्वेन समानाश्रयत्वाभावात्, तत्त्वञ्च असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायान्न्यूनानतिरिक्ताश्रयकत्वमिति, न च वामशसोरित्युत्तरसूत्रसाहचर्य्येण स्त्रिया इति सूत्रस्यापि सुप्येवाजादौ प्रवृत्तेः स्त्री इयतीत्यादौ न दोष इति वाच्यम् सूत्रान्तरसाहचर्य्यस्य भाष्येऽदृष्टत्वात्। किञ्च भनक्तीत्यादौ श्नमि परे भशब्दस्याङ्गसंज्ञायां अतो दीर्घो यञीति दीर्घापत्तेः। न च भूसुवोस्तिङीति सूत्रात्तिङोऽनुवृत्तौ तिङ् सार्वधातुके दीर्घविधानान्न दोष इति वाच्यम्, ज्ञाजनोर्जेति सूत्रस्थभाष्यविरोधापत्तेः। तत्र हि भाष्ये जविधानेपि अतो दीर्घो यञीति दीर्घे जानातीति सिद्धो दीर्घोच्चारणमङ्गवृत्तिपरिभाषां ज्ञापयतीत्युक्तम्। तिङोऽनुवृत्तौ श्नाप्रत्ययस्य तिङ्त्वाभावेन भाष्यविरोधः स्पष्ट एव, किञ्चात्र वारणेपि अभनकागित्यत्र अकाचिपरेऽङ्गसंज्ञायाम् अल्लोपो न इति लोपापत्तेः। नचात्र अल्लोपो नो नाके इति न्यासेन न दोष इति वाच्यम्, अशब्दस्य औ विभक्तौ औ इति, वारि औ इत्यत्र परादिवद्भावेन प्रत्ययत्वाद्विभक्तित्वाच्च तस्मिन्नङ्गसंज्ञायामिकोचीति नुमापत्तेः। न चेकोचीति सूत्रे सुपोऽनुवृत्त्यैव सिद्धे विभक्तिग्रहणमनातिदिष्टविभक्तिग्रहणार्थमिति प्रकृतेऽतिदिष्टविभक्तौ न दोष इति विधिग्रहणफलाश्चिन्त्यमिति वाच्यम्, एवं सति महतो वंशस्तम्बाल्लट्वानुकर्षणवल्लाघवाभावाद्विधिग्रहणकरणस्यैवौचित्यादिति दिक्॥ (प्रत्यये किमिति) प्रत्ययविशिष्टस्येति विशिष्टस्याङ्गसंज्ञायां रामाभ्यामित्यादौ दीर्घो न स्यादिति भावः। नचाङ्गावयवस्यातो दीर्घो भवतीत्यर्थे रामाभ्यामित्यादौ न दोष इति वाच्यम्, राज्ञः पुरुषो राजपुरुष इत्यादौ प्रत्ययलक्षणेन अन्तर्वर्त्तिविभक्त्या पदत्वे कर्त्तव्ये न लुमताङ्गस्येति निषेधान्नलोपानापत्तेः। सिद्धान्ते तु अङ्गेन प्रत्ययाक्षेपात् प्रत्यये परतः पूर्वस्य कार्य्ये एव निषेधप्रवृत्त्या प्रकृते तदभावेन न दोष इति। न च न लुमता तस्मिन्निति न्यासेन न दोष इति वाच्यम्, चत्रश्चेत्यत्र

उरदत्वस्य परनिमित्तकत्वाभावेन स्थानिवत्वेन सम्प्रसारणत्वाला-
भान्न सम्प्रसारणे इति निषेधाप्राप्त्या वकारस्य सम्प्रसारणापत्तेः ।
सिद्धान्ते तु अङ्गेन प्रत्ययाक्षेपादुरदत्वस्य परनिमित्तकत्वमिति
बोध्यम् । न च न सम्प्रसारणे इति सूत्रे सम्प्रसारणपदं सम्प्रसारण-
स्थानिके लाक्षणिकमिति प्रकृते न दोष इति वाच्यम् । देवदत्त
ओदनमपाक्षीदित्यादौ देवदत्तोत्तरं सुपन्निमित्तीकृत्य लुङ्पर्य्यन्त-
स्याङ्गसंज्ञायां देवात्पूर्वमप्यडागमापत्तेः। न चाङ्गविधायकेऽङ्गाननुवृत्त्या
तदादिपदोपस्थित्या च तदादिरङ्गं भवतीत्यर्थे प्रकृते न दोष इति
वाच्यम्, अनेकत्रानेककल्पनापेक्षया प्रत्ययग्रहणकरणे एव लाघवा-
दिति संक्षेपः । द्वयोः सम्बन्धः सन्निपातस्तल्लक्षणजायमानो
विधिः स स्वातिरिक्तसम्बन्धाविघातके शास्त्रेऽनिमित्तम्भवतीत्यर्थिकया
सन्निपातपरिभाषया दीर्घाभावमाशङ्क्य अनित्यत्वेन समाधयति
( कष्टायेति) न चास्य निर्देशस्याकृतसार्वधातुकयोरिति दीर्घेणोपपत्ते-
रनित्यताज्ञापकङ् कथमिति वाच्यम्, तस्यापि सन्निपातपरिभाषया-
ऽप्रवृत्तेः। किञ्च अकृदिति पर्य्युदासेनासुप्येव प्रवृत्तेरिति दिक्(बहुवचने
किमिति) अयम्भावः राम इत्यादौ प्रत्ययः परश्चेत्यादिनिर्देशात् एङ्ह्र-
स्वादित्यत्र इदुदेङ्सम्बुद्धेरित्येव सिद्धे ह्रस्वग्रहणाच्च सौ परे एत्वन्नेति
ज्ञापनान्न दोषः, रामस्येत्यत्रापि टाङसीनिसूत्रेण ङसोऽस्यविधानेन
पररूपेणैव सिद्धेर्न्न दोषः । नचास्येत्यत्र हलादित्वाभावद्धालि लोपो
न स्यादिति वाच्यम्,आपि लोप इति न्यासेन टौसोरनक इति न्यासेन
च विषयविभागाल्लोपसिद्धेः रामाभ्यामित्यत्र सुपि चेति सूत्रारम्भ-
सामर्थ्यादेव न दोषः । रामायेत्यत्र चारितार्थ्यन्तु न शंक्यम्, ङेरय
इति करणेन अकारोच्चारणसामर्थ्यात्पररूपबाधे दीर्घेणैव सिद्धे-
रिति प्रश्नः। रामाभ्यामित्यत्रैव रामेभ्य इत्यत्रापि एत्वम्बाधित्वा
दीर्घापत्तेः, एत्वन्तु रामेष्वित्यादौ चारितार्थ्यमित्युत्तरम् । ( झलि
किमिति ) उतो वृद्धिर्लुकि हलीत्यतो हलीत्यनुवृत्तौ रामा इत्यादौ न
दोषः । सन्निपातपरिभाषाविरोधाद्रामाणामित्यादौ न दोष इति
प्रश्नः (रामाणामिति) । अस्मादेव ज्ञापकादेत्वे सन्निपातपरिभाषा न

प्रवर्त्तते इति ज्ञापनाद्रामाणामित्यत्र दोष इत्युत्तरम्, अतएव सर्वेषामिति निर्देशसिद्धिरिति दिक् ( षत्वमिति ) न च बहुवचने सम्येदिति न्यासे न दोष इति वाच्यम्, सम्पूर्वकाद्गम्धातोः समो गम्यृच्छिभ्यामित्यात्मने पदे लिङि सङ्गसीरन्नित्यत्र सादिबहुवचनसत्त्वेन षत्वापत्तेः। (अत एव सः सीति) प्रयत्नभेदान्नत्वाभावादित्यर्थः, न च चयो द्वितीया इति द्वितीयार्थन्ताद्विधानमिति वाच्यम्, सकारमात्रनिमित्तकान्तरङ्गे द्वितीयादेशे कर्त्तव्ये सकाराद्यार्द्धधातुकानिमित्तकबहिरङ्गस्यासिद्धत्वात्प्रकृतवार्तिकाप्रवृत्तेरिति प्राचीनाशयः । ननु नामीति सूत्रापेक्षया सुपि चेत्यस्य परत्वेन रामाणामित्यत्र तेनैव दीर्घे सिद्धेऽत्रत्यलेखो न युक्तिकर इत्यत आह ( सुपि चेति नामीत्यनेन त्विति ) न च कतीनामित्यत्र दीर्घेऽपि षट्त्वसत्वात्सन्निपातपरिभाषाया अप्रवृत्तौ नामीति सार्थकमिति वाच्यम्, कतेर्नामीति न्यासेनैव सिद्धे सामान्यसूत्रारम्भसामर्थ्यात्परिभाषाबाध इत्याशयात्, अत एव न ह्येकमुदाहरणं योगारम्भम्प्रयोजयन्तीति भाष्ये उक्तम्। न च न तिसृचतसृेति सामर्थ्यान्नामीति कर्त्तव्ये सन्निपातपरिभाषा न प्रवर्त्तते इति वाच्यम्, अत्रैव ग्रन्थकारस्याशयात्। अत एव नामीत्यनेन त्वित्युक्तं मूले। (इण् कोः किमिति) राम इत्यत्र विसर्गम्प्रति षत्वस्यासिद्धत्वान्न दोषः, रामस्येत्यत्र सकारोच्चारणादेव न षत्वमिति प्रष्टुराशयः । सकारोच्चारणमिण्कोरित्यनुवृत्तावेव तात्पर्यग्राहकम्भविष्यतीति समाधानमिति दिक् ( आदेशप्रत्यययोः किमिति ) इण्कोरित्यधिकारसूत्रम्विधिसूत्रम्मत्वा न दोष इत्याशयेनाशङ्कते (सुपीः सुपिसाविति)सुपीरित्यत्रासिद्धत्वादेव न दोष इत्यतः सुपिसावित्युपन्यस्तम्। न च शासिवसिघसीनामिति सूत्रवैयर्थ्यापत्त्या धातोः सकारस्य षत्वं स्याद्यदि तदेषामेवेति नियमेन प्रकृते न दोष इति वाच्यम् । बहुलक्ष्यानुरोधात्प्रकृतविपरीतनियमबाधार्थमेवादेशप्रत्यययोर्ग्रहणमित्याशयात् । केचित्तु एतादृशविपरीतनियमम्मत्वा लक्ष्यासिद्धिदोषं शिरसि धृत्वा खण्डयन्ति ते धन्यतमा एवेत्याहुः ।

ननु शब्दस्वरूपाध्याहारे प्रमाणाभावेन कथं सर्वादिसूत्रे तदन्तविधिरित्यत आह (द्वन्द्वे चेति ज्ञापकादिति) न च अन्न उभौ चेति द्वन्द्वे गुणौ अेभावित्यत्र परादिवद्भावेन प्राप्तसर्वनामसंज्ञानिषेधार्थं सूत्रमावश्यकमिति वाच्यम्, तदन्तविधिज्ञापकतापरभाष्यप्रामाण्यादुक्तप्रयोगस्यानभिधानत्वमित्याशयात्। नहि तदन्तविधिम्विना समुदाये संज्ञाप्रसक्तिरस्ति या निषिध्येत, अतः शब्दस्वरूपाध्याहार आवश्यक इति बोध्यम्। न च तदन्तविध्यभावेपि वर्णाश्रमेतराणामित्यत्रावयवस्य सर्वनामसंज्ञयाऽकच् माभूदित्येतदर्थं द्वन्द्वघटकस्य सर्वनामसंज्ञा न भवतीत्यर्थेन निषेधार्थमावश्यकमिति वाच्यम्, अवयवमात्रेण कुत्साविवक्षाया अभावेन सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्साविवक्षायामकजित्यर्थकस्याव्ययसर्वनाम्नामकजित्यस्याप्राप्तेरित्यलम् ( त्रलिति ) तदन्तसंज्ञाम्विना सर्वनामप्रकृतिकत्वस्या अभावेन त्रल् न स्यादिति भावः। ननु अनेकाल्शित्सर्वस्येति सूत्रस्थशिद्ग्रहणज्ञापितनानुबन्धकृतमनेकाल्त्वमिति परिभाषया अर्वणस्त्रसावीति सूत्रविहिततआदेशस्यानेकाल्त्वाभाववत्, प्रकृतादेशस्यापि नानेकाल्त्वमिति कथमनेकाल्त्वात्सर्वादेशः। शित्वादपि न वाच्यम्, सर्वादेशम्विना शित्वस्यैवाभावादित्याशयेनाह ( नचार्वणस्त्रित्यादाविति। इत्संज्ञाया अभावादिति। ) एवञ्चेत्संज्ञाचत्वरूपानुबन्धत्वाभावेन नानुबन्धकृतमित्यस्याप्राप्तेरिति प्राञ्चः, नव्यास्तु इत्संज्ञायोग्यत्वमनुबन्धत्वमिति भाष्यमतसिद्धत्वेनोक्तपरिभाषानिषेधाच्छित्वादेव सर्वादेशत्वम्, इत्संज्ञायोग्यशकारवत्त्वमेव शित्वमिति। ( द्वित्वविशिष्टस्य वाचक इति ) द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधजनक इत्यर्थः। अत एवेति द्वित्वविशिष्टस्य बोधकत्वादित्यर्थः। ननु सर्वादिगणप्रयुक्तकार्यस्यैकवचने बहुवचने च विधानादुभशब्दपाठो व्यर्थ एवेत्यत आह (तस्येहेति अकजर्थ इति) न च काकचोः को विशेषः, प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तस्यैव फलत्वात् ) न च सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात् सुबन्तस्यैव

प्रकृतित्वेन चित इत्यनेनान्तोदात्तत्वम्, उभकाभ्यामित्यादौ सुबन्तस्यैव के तु प्रकृतेरिति वाच्यम्, तद्धितविधौ प्रातिपदिकाधिकारात्तस्यैव प्रकृतित्वादित्याशयेनाशङ्कते ( न चेति ) केचित्तु उभाभ्यां हेतुभ्यामुभयोर्हेत्वोरित्यत्र सर्वनाम्नस्तृतीया चेति विधानार्थमुभशब्दस्य गणे पाठ इति वदन्ति तन्न, निमित्तपर्यायप्रयोगे सर्वासाम्प्रायदर्शनमित्यनेनैव सिद्धेः, तस्य च वार्त्तिकस्य हेताविति सूत्रे पाठेन सर्वनामसंज्ञानपेक्षत्वात् ( अयच्सङ्गादिति ) उभादुदात्तो नित्यमिति सूत्रे नित्यमिति योगविभागेन उभशब्दादयज्भवति स्वार्थे इत्यर्थकेन उभयत उभयत्रेत्यादाविवायच् स्यात्, कप्रत्ययेन व्यवधानाद् द्विवचनपरत्वाभावात्,अकचि तु तन्मध्यपतितन्यायेन अकज्विशिष्टस्योभशब्दत्वाद् द्विवचनपरत्वमेवेति न दोषः। अत्र मानमाह(तदुक्तमिति) वार्तिककृतेति शेषः, भाष्ये तु स्वार्थिकत्वेन कप्रत्ययस्यापि द्वित्वविशिष्टवाचकत्वेन द्विवचनत्वमाश्रित्योभशब्दपाठः प्रत्याख्यातः, अत एव उभयोरुभौ उभोभावित्यादौ नायच्, त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहिताविति,तत्त्त्कारकशक्तिप्रधानावेवेति न तयोर्द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वरूपद्विवचनत्वम्, वार्तिके द्विवचनपदेन कृत्रिमस्यैव ग्रहणमित्याशयेन मनोरमायामुभशब्दपाठः सिद्धान्तित इत्यनयोर्युक्तं स्वयमूहनीयमित्यलम् । ( कैयट इति ) उभयोऽन्यत्रेति वार्त्तिकस्य उभयो मणिरुभये देवमनुष्या इति भाष्ये उदाहरणादानात्, तद्धितश्चासर्वविभक्तिरित्यनेनोभयशब्दस्य प्राप्ताव्ययसंज्ञावारणार्थन्तसिलादय इत्यादिपरिगणनाच्च, अस्य द्विवचने रूपमनभिधानमित्याशयः (हरदत्त इति) नचोदाहरणमादरणीयमिति भाष्येण पचति रूपम्पचति कल्पमित्यादावव्ययत्वाभावाय परिगणनस्य उपक्षीणतया च द्विवचने रूपस्य बाधकत्वे प्रमाणाभावादित्याशयः। ननु तयपः स्थानेऽयचो विधानमिति प्राचीनमते स्थानिवत्त्वेनोभयशब्दस्य तयप्प्रत्ययान्ततया प्रथमचरमेति विकल्पसंज्ञा कुतो नेत्यत आह ( तस्माज् जस्ययजिति ) नवीनास्तु विकल्पशास्त्रस्य पक्षे निषेधे तात्पर्येण निषेधाश्च बलीयांस इति परिभाषया विकल्प एवोचितः,

किञ्च भाष्येऽयचः प्रत्ययान्तरत्वेन पाठात्स्थानिवत्त्वन्दुर्लभमेव किञ्च उभयशब्दे आतिदेशिकविकल्पसंज्ञाया अनवकाशत्वेन नित्यसंज्ञा-बाध एवोचितः । किञ्चान्तरङ्गपरिभाषया समाधानमप्यनुचितमेव नित्यसंज्ञाया यथोद्देशत्वेन प्रातिपदिकसंज्ञासमकालमेव प्रवृत्तेः। नहि अन्तरङ्गे कृतेपि वहिरङ्गस्यासिद्धत्वम्भवति प्रमाणाभावादित्यलम्धक-वन्धप्रयासेनेत्याहुः ( एकस्तान्त इत्यपरे इति ) तथा च जयदेवः त्वदधरमधुरमधूनि पिवन्तमित्याह । केचित्तु त्वदिति युष्मच्छब्दस्ये-त्याहुस्तन्न, त्वत्तोऽन्यस्या अधर इत्यर्थासङ्गतेः । ( त्वकम्पिता य-स्येति ) युष्मद् सु पितृ सु इत्यलौकिकसमासार्थविग्रहे वहुव्रीहे-श्चिकीर्षितत्वेन सर्वनामसंज्ञानिषेधादकचोऽभावेन स्वार्थिके के प्रत्ययोत्तरपदयोश्चेति त्वदाद्यादेशे त्वत्कपितृक इत्यादि सिद्धम् । सूत्राभावे चिकीर्षित इत्यर्थाभावे च अलौकिकवाक्ये एवाकचि तस्यातिभवकानित्यत्रेव श्रवणम्प्रसज्येत, नचाकृतव्यूहपरिभाषया पूर्वमकच् न भविष्यतीति वाच्यम्, तस्या अनित्यत्वादसत्वाच्च । ( भाष्यकारस्त्विति ) अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशया-वित्युक्तेः॥ ( यथोत्तरम्मुनीनामिति ) अत्र च मानम्, धिन्विकृण्व्योर चेत्यकारविधानमेव, अन्यथा वलोपविधानेऽपि न धातुलोप आर्द्ध-धातुके इति निषेधाद् गुणाभावे सिद्धेऽकारविधानम्व्यर्थं स्यात् न धात्विति सूत्रस्य प्रत्याख्याने गुणः स्यादेतदर्थमकारविधानमिति पाणिनिना सूचितम् । प्रकृतवार्त्तिकस्य प्रत्याख्यानप्रकारमाह (महा-संज्ञाकरणेनेति ) अयम्भावः-लघ्वर्थं संज्ञाकरणमिति भाष्यान्महा-संज्ञाकरणेनान्वर्थम्विज्ञायते तेन सर्वेषान्नामसर्वनाम इति महासंज्ञा-बोधितप्रधानप्रसिद्धस्वीयसर्वार्थवाचकानामेव गणे पाठात्तेषामेव संज्ञाविधानेन संज्ञोपसर्जनयोर्गणे पाठाभावेन संज्ञाया अप्रवृत्तेः संज्ञाकार्य्यं स्मायादयः, अन्तर्गणकार्य्यमद्डादयः । ( वाक्येऽपि नेति) समासेनुवर्तमाने पुनः समासग्रहणान्तदर्थकवाक्यपरमिति भावः ॥ (समुदायस्यायन्निषेध इति) द्वन्द्वे चेति प्रथमार्थे सौत्री सप्तमी तेन द्वन्द्वः सर्वनामसंज्ञको न भवतीत्यर्थे द्वन्द्वशब्दस्य समुदायवाचित्वात्तस्यैव

सर्वनामसंज्ञानिषेध इति भावः। ननु अवयवस्य सर्वनामत्वेन सर्वनामाग्ताङ्गात्परस्यामः सुडागम इत्यर्थेन प्रकृते सुडापत्तिरित्यत आह(न चैवमित्यादि) न चावयवस्य सर्वनामत्वेऽकच् स्यादिति वाच्यम्, अवयवमात्रेण कुत्सार्थप्रतीत्यभावेनाकचोऽप्राप्तेरित्यलम्। (वृत्तिकृतेति) इत्थं हि तदीयो ग्रन्थः विप्रतिषेधे परमित्यत्र परशब्दस्येष्टवाचित्वादिष्टङ्कार्यञ्च पूर्वविप्रतिषेधेन विभक्त्यादिशः, अत एव भाष्येऽजरांसीत्यत्र नुमजरसादेशयोः प्राप्तौ विप्रतिषेधेन जरसित्युक्तम् अन्यथा शिभावात्पूर्वमेव जरसः प्राप्तौ तदा सर्वनामस्थानाभावेन नुमोऽप्राप्तौ नुमाविप्रतिषेधविचारासङ्गतिः, एवञ्च पूर्वम्विभक्त्यादेशे ततः सन्निपातपरिभाषाऽनित्यत्वेन जरसादेशे निर्जरसिनेत्यादि रूपाणीति, तदनित्यत्वे मानञ्च इनातोरिकारदीर्घोच्चारणम्, एसि कर्तव्ये ऐस्करणञ्चेति, एवम्वृत्तिकारमतानुयायिनोप्याहुः ( भाष्यविरुद्धमिति ) इष्टमेवैतत्संगृहीतमतिजरमतिजरैरिति भवितव्यं, सन्निपातपरिभाषयेति भाष्यम् । बहुवचने झल्येत्, ओसि च आङि च, आपः सम्बुद्धौ चेत्येवम्पाठेन आङि परे एत्वम्विधाय रामेणेत्यादि संसाध्य अकारोच्चारणसामर्थ्यात्पररूपाभावे दीर्घेण रामादित्यादि संसाध्य इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरम्भाष्यञ्च विरुद्धं स्यादिति । तथा हि फलैक्ये प्रत्याख्यानं सम्भवति न तु फलभेदे, पूर्वम्विभक्त्यादेशे सति इकारोच्चारणसत्त्वे निर्जरसिन अधुना निर्जरेण एवं दीर्घोच्चारणसत्त्वे निर्जरसात् अधुना निर्जरसदिति फलभेदः स्यादतो वृत्तिकारमतम्भाष्यविरुद्धमिति इकारोच्चारणप्रत्याख्यानपक्षे अनेनेत्यत्र दोषोद्भावनन्नाशङ्कनीयम् । दीर्घोरनक आपि लोप इति करणादोषात् किञ्च अनाप्यक इति सूत्रे अ इति नपुंसक निर्देशेन अनापि अर्थात् नकारे आपि च परे अनादेशो भवतीत्यर्थे नकारे परे विशिष्यविधानेन हल्लिलोपस्य बाधादिति दिक् । ( प्रामादिकमिति ) अत एवास्नोपृक्तस्य वर्तिकामस्मोके इति मन्त्रव्याख्याने आस्नो मुखादित्यर्थकरणं सङ्गच्छते । ननु पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासेऽल्लोपस्य स्थानिवत्त्वात्पकारात्परत्वाभावेन णत्वन्न स्यात्,न च पञ्चमीसमासस्य

फलाभावेन किमर्थन्तत्स्वीकार इति वाच्यम्, अपीपचन्निति सिद्धये तस्यावश्यकत्वात् अन्यथा जुस् स्यात् तत्स्वीकारे तु पररूपस्य स्थानिवत्त्वेन तद्व्यवधानान्न जुस्। न च तत्स्वीकारे हे गौरित्यत्र वृद्धेः स्थानिवत्त्वेन सुलोपापत्तेरिति वाच्यम्, प्रविगण्य्येति भाष्योदाहरणेन पञ्चमीसमासस्यानित्यत्वात्, अन्यथाऽल्लोपस्य स्थानिवत्त्वाल्ल्यपि लघुपूर्वादिति णेरयादेशो न स्यात्, इत्याशयेनाशङ्कते ( इह पूर्वस्मादिति,तस्य दोष इति) चक्र्यत्र निगाल्यते माथवपनी इत्याद्युदाहरणानि ( प्रकारार्थमिति ) प्रकारो भेद-सादृश्यम् तच्च सुप्त्वेन न तु शब्दत्वेन हृदयस्य हृल्लेखयदण्लासेषु वा शोकष्यभ्रोगेष्वित्यादिलिङ्गात् न लुमताङ्गस्येत्यस्यानित्यत्वेन सुप्परत्वस्योध्यम् न च सुप्त्वेन सादृश्यग्रहणे सर्वत्र पदादय आदेशाः स्युरिति वाच्यम् सुप्रभृतिष्विति वाच्ये शस्प्रभृतिष्वित्युक्त्या अन्यत्र क्वाचिदेवेति सूचनात् ॥ प्रकारार्थत्वे मानमाह ( तथा चेति ) अन्यत्सर्वं सुगमम् । ( आत इति योगविभागादिति ) त्वा इत्यादिसिद्ध्यर्थं आतो नाप इति वार्तिकं योगविभागेनैव प्रत्याख्यातमिति भावः (शेषः किम्मत्यै इति) अत्र घिसंज्ञायां गुणः स्यात्। ननु नदीघिसंज्ञयोः प्राप्तयोरेकसंज्ञाधिकारस्थत्वात्परत्वादनवकाशत्वाच्च नदीसंज्ञैव भविष्यतीत्याशयेनाह (एकसंज्ञाधिकारादिति ) न च गवां पत्यै स्त्रियै इत्यादौ नदीसंज्ञायाश्चारितार्थ्यात्कथमनवकाशत्वमिति वाच्यम्,पतिः स्त्रियामिति करणेनैव सिद्धेः। सामान्ययोगस्यानवकाशत्वादिति बोध्यम्। ( ह्रस्वौ किमिति ) अयम्भावः ह्रस्वग्रहणाभावे यू इत्यधिकाराद्दीर्घयोरेव घिसंज्ञायाम्वातप्रम्ये इत्यादावेव स्यात्, ह्रस्वयोस्तु नैव स्यादिति। न च असखीति पर्युदासेन पतिः समास एवेति सूत्रेण च ह्रस्वयोरेव संज्ञा भविष्यतीति वाच्यम् सखायमिच्छति सखीयति सखीयतीति सखीः पतीयतीति पतीरित्यत्र चारितार्थ्यात्। न च इद् वृद्धौ अच्च घेरित्यादिनिर्देशेन ह्रस्वयोरेव भविष्यतीति वाच्यम्, एतादृशकष्टकल्पनापेक्षया ह्रस्वग्रहणकरणे एव लाघवात्। ( यू किं मात्रे इति ) न च ऋतो ङि सर्वनामस्थानयोरिति सूत्रे ङिग्रहणसामर्थ्याद्दन्ताङ्गस्य ङिति सुपि गुणः

योरपि बाध्यबाधकभावसत्वान्कुरामित्यनेनाटो बाधात्कथमाटः प्रवृत्तिरिति वाच्यम्' अनवकाशत्वेन बाधेपि अपवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गप्रवृत्तेर्न्न दोषः। अत एव रमायामित्यत्र आमा याटो बाधेपि पुनर्याटः प्रवृत्तिः। न चाटोपि विशेषविहितत्वेन नुटो बाधे अपवादत्वविषये विप्रतिषेधाप्रवृत्तेः कथम्परत्वादित्युक्तिः सङ्गच्छते इति वाच्यम्, परत्वादित्यस्यापवादत्वादित्यर्थकल्पनेनादोषात् । केचित्तु परशास्त्रस्य सर्वत्र बलवत्ताप्रयोजकत्वेनात्रापि तथैव बलवत्त्वमिति वदन्तीति दिक् । ( अङ्यन्तत्वादिति ) लक्षेर्मुट् चेतीप्रत्ययान्तत्वादिति भावः। कृदिकारादिति ङीपि तु सुलोपो भवत्येव, अतएव लक्ष्मीर्लक्ष्मी हरिप्रियेति कोशः सङ्गच्छते। ( कुमारीति ) न चात्र क्यचो-ऽकारस्य स्थानिवत्वने यणादेश स्यात्,न च न पदान्तेति पदान्तविधौ निषेध इति वाच्यम,'नः क्ये इति नियमेनापदत्वात्,क्वौ लुप्तन्न स्थानिवदित्यपि न वाच्यम, सख्युर्गोमान् पदत्वञ्च क्वौ लुप्तमिति दर्शनादित्यभियुक्तव्यवहारादिति वाच्यम, लुनीरित्यादिभाष्योदाहरणेन क्वचिदन्यत्राप्यस्यार्थस्याङ्गीकारात् ॥ ( धातुना संयोगविशेषणात् ) धातुपदावृत्त्येति शेषः। यदि हि अङ्गन्त विशिष्यते तदा हरिं हरी इत्यादावपि यण् स्यात्। यदि च असंयोगपूर्वस्येत्यस्य धात्ववयवसंयोगभिन्नपूर्व इत्यर्थ एवञ्च प्रत्यासत्त्या तद्भिन्नश्च धात्ववयव एव गृह्यते तदा हरिमित्यादौ दोषाभावो बोध्यः। अत एव उदियाविति भाष्यप्रयोगः सङ्गच्छते इति दिक् ॥ ननु दुर्धियः वृश्चिकभिय इत्यादौ गतिकारकपूर्वत्वेन यणादेशः कुतो नेत्याशयेनाशङ्कते ( कथन्तर्हीति दुरित्यस्येति ) दुःशब्दोपात्तदुष्टत्वस्येत्यर्थः । धीशब्दम्प्रतीति धीशब्दार्थम्प्रतीत्यर्थः। यत्क्रियायुक्ता इति यस्य धातोर्वाच्यया क्रिययेत्यर्थः। तम्प्रत्येवेति तदर्थम्प्रत्येवेत्यर्थः। एतच्च उपसर्गाः क्रियायोगे गतिश्चेति सूत्रे योगग्रहणाल्लभ्यते,अन्यथा तृतीयानिर्देशेनैव तल्लाभात् ( नेहेति ) किन्तु सम्बन्धसामान्यषष्ठ्यैव समास इति भावः। ननु हेतुत्वविवक्षायां भीत्रार्थानामिति कारकत्वं स्यादेवेत्यत आह (वृश्चिक-

सम्बन्धिनी भीरिति ) शाकपार्थिवादीनामित्युत्तरपदलोपः ॥ ( दीर्घस्यापि ग्रहणादिति ) ल्यत्यादित्यत्र प्रयोगस्थस्य विकृतिविशिष्टस्यानुकरणादविशेषेण दीर्घस्यापि ग्रहणादिति भावः । लुनीरित्यादौ ल्वादिभ्यश्च पचो वः शुषः कः प्रस्त्योऽन्यतरस्यामित्येतैः सूत्रैर्नत्ववत्वकत्वमत्वानि क्वचि चेतीत्वे अल्लोपयलोपौ॥ ननु तृन्नन्तत्वात् तृजन्तत्वाद्वा सिद्धे नप्त्रादिग्रहणं व्यर्थमत आह(नियमार्थमिति) उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां संज्ञाशब्दानान्दीर्घश्चेन्नप्त्रादीनामेवेति नियमः।नेष्ट्रादीनामप्युणादिनिष्पन्नत्वात्,तेनान्येषां संज्ञाशब्दानान्नेति बोध्यम्॥ ( भाष्यप्रयोगादिति ) अनेनोद्गातृशब्दस्योणादिषु व्युत्पादनं प्रामाणिकमिति सूचितम्। यत्तु भाष्यप्रयोगादेव दीर्घत्वमिति तदसत् भाष्यकृतान्यप्रयोगस्य दानेप्यस्याभाष्यप्रयोगाभावात्, भाष्यकारस्तु तृचि चकारः किमर्थं इत्याशङ्क्य अप्तृन्नित्यत्र विशेषणार्थं इति समाधाय तृ इत्येव सिद्धे इति पुनराशङ्क्य मातरौ पितरावित्यादावपि प्राप्नोतीति समाधाय नप्तृग्रहणेन योनिसम्बन्धवाचिनाश्चेदस्यैव नान्येषां योनिसम्बन्धवाचिनामिति नियमेन मातरावित्यादौ दोषःपरिहृतः। मातरावित्यादौ तृप्रत्ययो निरनुबन्धक इत्याशयः। एवञ्च यथान्यासे नियमफलञ्चिन्त्यमिति बोध्यम् । (वैकल्पिकातिदेशादिति ) यत्तदेतेभ्य इत्यत्र त्यदाद्यत्वकरणेनातिदेशस्य त्वियो दीर्घादित्यत्र धात्वनुकरणे विभक्तिकरणाद्वैकल्पिकत्वस्य च बोधनादिति भावः अनुकार्य्यानुकरणयोर्भेदविवक्षायां अनुकरणेन बोधाय शक्तेः स्वीकाराच्छक्तिमत्वरूपार्थवत्त्वस्य सत्वेन प्रातिपदिकत्वात्स्वादिसिद्धिः अत एव, भुवो वुगित्यादिनिर्देशःसङ्गच्छते अभेदानुकरणेन अनुकार्य्यनिरूपितशक्त्यैव अनुकरणेनापि बोधाच्छक्तिमत्वरूपार्थवत्वाभावेन प्रातिपदिकत्वाभावान्न विभक्तिः, अत एव भूसत्तायामित्यादिनिर्देशसङ्गतिः । अभेदानुकरणञ्च सूत्रेष्वेव गावित्ययमाहेत्यादौ वान्तस्यैव भेदानुकरणमिति अनुकार्य्यस्वरूपभङ्गभिया न वलोप इति वैयाकरणसमयः । इत्वे रपरत्वमिति ऋत इद्धातोरित्यनेन । ( हे भानो इति ) नन्वत्र

स्यान्ङावेवेति नियमेन प्रकृते न दोष इति वाच्यम्, विधिनियमसंभवे विधिरेव, ज्यायानिति नियमेन ङिग्रहणं यू इत्यनुवृत्तावेव तात्पर्य्यग्राहकमित्याशयात् । किञ्च अकारान्तस्यापि घिसंज्ञायां हरिश्च हरश्च हरिहराविति वद्धरहरी इत्यपि स्यात्, द्वन्द्वे घीत्यनेन हरशब्दस्यापि पूर्वनिपातापत्तेरिति दिक् ॥ (निष्कौशाम्बिरित्यादि) अत्र कौशाम्ब्या निष्क्रान्तो निष्कौशाम्बिरिति निरादयः क्रान्ताद्यर्थे पञ्चम्या इति समासे कृते गोस्त्रियोरिति ह्रस्वत्वे स्थानिवद्भावेन ङीप्त्वाप्त्वात्सुलोपापत्तेः दीर्घग्रहणे तु दीर्घत्वस्यालमात्रवृत्तिधर्म्मतयाऽनल्विधाविति निषेधात्, न चात्र ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदित्यर्थकेन ङ्याब्ग्रहणेऽदीर्घ इति वार्तिकेन स्थानिवत्त्वनिषेधान्न दोष इति वाच्यम्, आकारादेः प्रश्लेषेण दीर्घग्रहणस्य वार्त्तिकस्य च भाष्ये प्रत्याख्यानादिति दिक्॥ ननु राजा सखेत्यादौ सकारस्य संयोगान्तलोपे दोषाभावेन हल्ग्रहणं किमर्थमित्यत आह (नलोपो न स्यादिति) न चे न ङि सम्बुद्ध्योरिति सूत्रे संबुद्धिग्रहणेन नलोपे संयोगान्तलोपो नासिद्ध इति ज्ञापनात्, अन्यथा हे राजन्नित्यादावपि संयोगान्तलोपस्यासिद्धत्वेनैव नलोपाभावे तद्वैयर्थ्यं स्पष्टमेवेति वाच्यम्, हे ब्रह्मन्निति नपुंसके स्वमोरिति सोर्लुकि चारितार्थ्यात् । न चात्र सम्बुद्धौ नपुंसकानान्नलोपो वा वाच्य इति वार्तिकेनैव सिद्धेरुक्तज्ञापनं सम्यगेवेति वाच्यम्, गोमानित्यादावपि नलोपे संयोगान्तलोपस्यासिद्धत्वाभावेन नलोपापत्तेः । न च ज्ञापकस्य सजातीयापेक्षत्वेन सम्बुद्धिविषयक एव नियम इति वाच्यम्, लक्ष्यानुरोधात् सम्भवति सामान्यापेक्षे विशेषापेक्षस्य गौरवेणान्याय्यत्वाच्च, एवञ्च प्रकृते नलोपः कथन्नेति चेत्सत्यम्, यत्र नकारविभक्त्योरान्तर्य्यन्तद्विषयकत्वन्नियमस्य ज्ञापकसाजात्यात् प्रकृते तकारव्यवधानेन नकारविभक्त्योरान्तर्य्याभावात्, एवञ्च हल्ग्रहणात्किमर्थमिति चेदत्र ब्रूमः, अभितोऽभ्रेत्यत्र संयोगान्तलोपस्यासिद्धत्वाद् रुत्वानापत्तेः । न च रोरुत्वे कर्त्तव्ये संयोगान्तलोपो नासिद्ध इत्यर्थकेन संयोगान्तलोपो रोरुत्वे इति वार्तिकेनासिद्धत्वा-

भावे न दोष इति वाच्यम्, अविगर्भवान् अजागर्भवान् इत्यादौ रात्सस्येति नियमेन संयोगांतलोपाप्राप्तेः। न च रात्सस्येत्यत्र तकारप्रश्लेषान्न दोष इति वाच्यम् प्रश्लेषे प्रमाणाभावात् अववर्त् इत्यादौ तलोपापत्तेश्चेति दिक् ॥ ( समुदायस्य सखिरूपत्वाभावेति ) अयम्भावः असखीत्यस्य सखिभिन्नावयवयोरिदुतोस्तदन्तयोर्वा घिसंज्ञेति वर्णसंज्ञापक्षे तदन्तसंज्ञापक्षे चार्थः ॥ एवञ्च समुदायस्य सखिभिन्नत्वेन घिसंज्ञा निर्बाधैव, भाष्यसिद्धान्ते तु सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोस्तदन्तयोर्वा घिसंज्ञेत्यर्थेनैव घिसंज्ञा लभ्यते॥ ननु परमः सखा यस्येति बहुव्रीहौ अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपप्राचीनमतसिद्धगौणत्वस्य सत्वेन कथमनङादेः प्राप्तिरत आह(गौणत्वेपीति)पदकार्यविषयकत्वं चास्य न्यायस्य स्त्रीत्वानिमित्तकत्वे सति सुब्विभक्त्यनिमित्तकत्वरूपपदकार्यत्वाभावान्न प्रवृत्तिरिति भावः। वस्तुतस्तु अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वेनोपसर्जनत्वमेव न गौणत्वम्, अप्रसिद्धत्वम् गौणलाक्षणिकत्वञ्च गौणत्वमित्येव भाष्याल्लभ्यते तदाशङ्कैव नास्ति ( लिङ्गविशिष्टपरिभाषाया अनित्यत्वादिति ) अनित्यत्वे मानञ्च शार्ङ्गलाङ्गूलेति वार्त्तिके घटशब्दात्पृथक् घटीग्रहणमेव ( गौणत्वेनेति केचिदिति ) आमि सर्वनाम्न इत्युत्तरसाहचर्यात् । ( वस्तुतस्त्विति ) उक्तरीत्या गौणत्वाभावात्, सूत्रान्तरसाहचर्ये प्रमाणाभावात्, तन्न्यायस्य पदकार्यविषयकत्वाच्चेति भावः। ( भवानिति ) न चात्त्वेपि स्थानिवत्त्वेनोगित्वादुगिद्चामिति नुमि न दोष इति वाच्यम्, सत्यपि नुमि नलोपापत्तेः। किंच शमी शमिनावित्यादौ नुमभावाय झलग्रहणापकर्षेण उगिज्झलन्तस्यैव नुमविधानात्स्थानिवत्वाप्राप्तेः। ननु त्यदादितः पूर्वमेव भवतुशब्दपाठेन न दोष इत्यत आह ( भवन्ताविति ) अत्र स च भवांश्च भवन्तावित्यत्र,त्यदादीनाम्मिथः सहोक्तौ यत्परमित्यादिना भवच्छब्दस्य शेषानापत्तेरिति दिक्, ॥ * ॥ * ॥

( इह परत्वादिति ) तेन सकृद्गताविति न्यायेन पुनर्न नुट् ॥ न चापवादो नुक् दीर्घत्वस्येति, दीर्घोऽकित इति सूत्रस्थभाष्यादागमादेश-

सम्बुद्धौ शाकल्यस्येति सूत्रारम्भसामर्थ्यान्न णित्वमित्यत आह ( हे भानव इति ) अत्र ब्रूमः थोश्च वृद्धिर्वक्तव्येति वार्तिकेन गोतो णिदिति सूत्रे गकारस्य विवक्षितत्वेन अन्यौकारान्तानामनभिधानमेव न च गकारस्य विवक्षितत्वे चित्रगुरित्यादावपि स्थानिवत्त्वेन गोशब्दत्वाणित्वाद्वृद्ध्यापत्तिरिति वाच्यम्, गोः पूर्वत्वाणित्वात्स्वरेषु स्थानिवत्त्वप्रतिषेधो वक्तव्य इति वार्तिकेनैव सिद्धेः । हे चित्रगो अमित्यत्र लाक्षणिकत्वादेव न दोष इत्यलम् ( इत्यजन्ताः पुँल्लिङ्गाः ) ॥ * ॥

सम्बुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितकतया पूर्वमेत्वे हल्ङ्यादिसूत्रे आकारप्रश्लेषात्स्थानिवत्त्वप्राप्त्या हल्ङ्यादिलोपाप्राप्तौ अनेनैव लोप उचित इत्याशयेनाह ( एङ् ह्रस्वादिति )। प्राचा तु रमायै इत्यादौ आटश्चेत्यनेन वृद्धिरित्युक्तम् तदसङ्गतम् ।। याडि टकारस्य समुदायानुबन्धकत्वेन टकारेत्संज्ञक आशब्दाभावेन तदप्राप्तेरित्याशयेनाह (वृद्धिरेचि रमायै इति । प्रतिपदोक्तादिगिति) तत्तच्छब्दानुवादेन विहितत्वरूपतत्वस्य समासे सत्वेन तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिक इति न तस्य ग्रहणमिति ( योत्तरेति ) या उत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थः । अत एव उत्तरापदस्य पूर्वनिपातः विशेषणत्वात् ॥ (स्पष्टार्थमिति) उक्तप्रतिपदोक्तसमासस्य बहुव्रीहित्वादिति भावः ॥ डलकवतां ह्रस्वो नेति वार्तिकप्रत्याख्यानाय द्व्यच्तरं यदिति भाष्ये पाठाद् द्व्यच्काम्यार्थकस्यैव ह्रस्व इति नियमे जगदम्बेत्यादौ न दोषः । आरम्भप्रत्याख्यानयोः फलाभेदाय सामान्यतो वार्तिकमसंयुक्तविपर्ययकम् । अन्यथा वार्तिकसत्वे अक्के अल्ले इति प्रत्याख्याने अक्क अल्ल इति फलभेदः स्पष्ट एवेत्यत आह । ( असंयुक्ता ये डलका इति । यद्यपि जरसादेशस्येति ) एवञ्च एतेषां नित्यत्वेन पूर्वम्प्रवृत्तौ क्वचिदजादित्वाभावात् क्वचित्सन्निपातपरिभाषया च न जरसः प्राप्तिरिति आबन्तं यदङ्गमिति आबन्तं यत्तदादि तद्रूपं यदङ्गमित्यर्थः, आबन्तन्तदादि खट्वेति न तदङ्गम् अतिखट्वेति च नाबन्ततदादिरिति न दोषः ।अत्र केचित्

ट्वाया अर्द्धे अर्द्धखट्वायामित्यत्र याट्सिद्धये अङ्गविशेष्यकतदन्त-
धेरावश्यकत्वेनात्रापि याट: प्राप्तेर्दुर्वारत्वादित्याहुस्तन्न अस्याक...
स्य लाक्षणिकत्वेन न याट: प्राप्तिरित्याशयात् । किञ्च अतिदेशस्य
कार्यार्थतया ह्रस्वाकारे फलाभावेन स्थानिवत्त्वाप्राप्तौ स्थानिन्याप्त्व-
बुद्धेरभावात्तदादेशे दीर्घः कथं स्थानिवत्त्वेनाप्त्वबुद्धिरित्यलम् ।
( उपसर्ज्जने स्त्रीप्रत्यये इति ) न च स्त्रीप्रत्ययमात्रे कथं
शास्त्रीयोपसर्ज्जनत्वमिति वाच्यम्, तस्याभावेपि लौकिकोपसर्ज्ज-
नत्वस्य सत्त्वात् तत्त्वञ्च स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यता-
निरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वमिति स्वं
स्त्रीप्रत्ययस्तदन्तमतिखट्वेति तत्पर्याप्ता शक्तिः स्त्रीत्वविशिष्टखट्वा-
कर्म्मकातिक्रमणकर्तृत्वावच्छिन्ननिरूपिता तन्निरूपकोर्थः स्त्रीत्व-
विशिष्टखट्वाकर्म्मकातिक्रमणकर्तृत्वरूपस्तन्निष्ठविशेष्यतानिरूपित-
प्रकारता अतिखट्वनिष्ठा तन्निरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोज-
कत्वं स्त्रीप्रत्ययस्याक्षतमेवेति दिक् ( गुणदीर्घोत्वानामिति ) मद्विषये
यद्यत्प्राप्तन्तत्तन्मया बाध्यमिति बाध्यसामान्यचिन्तया सर्वेषां बाध
इति भावः । न च प्रियतिस्रेत्यादिरवकाश इति वाच्यम्, यणा गता-
र्थत्वात् । एवञ्च तिस्रस्तिष्ठन्तीत्यत्र जसि चेति गुणस्य तिस्रः पश्य-
न्तीत्यत्र प्रथमयोरिति दीर्घस्य प्रियतिस्रः स्वमित्यत्र ऋत उदित्यस्य
बाधः॥ (स्त्रियामिति त्रिचतुरोरिति) अयम्भावः स्त्रियामित्यस्याङ्गत्रिच-
तुरोश्च संन्निधानाद्विशेषणासम्भवेन अङ्गविशेषणे स्त्रियाम्वर्तमानं
यत्त्रिशब्दान्तम् चतुरशब्दान्तञ्चाङ्गन्तदवयवयोर्न्निर्द्दिश्यमानयोरि-
त्यर्थे बहुलक्ष्यासिद्धिरतस्त्रिचतुरोर्विशेषणे स्त्रियाम्वर्तमानयोस्त्रि-
चतुरोस्तदन्तं यदङ्गन्तदवयवयोरित्यर्थ इति न दोषः । मानन्तु श्रुता-
नुमितयोः श्रुतसम्बन्धो बलवानिति न्यायः । प्रकरणादितः श्रुतेर्बल-
वत्त्वादिति तत्फलन्तु मूले स्पष्टमिति दिक् ( रादेशात्पूर्वेति ) प्रियति-
सृणीति भाष्योदाहरणात् अथवा न तिसृचतसृ इति ज्ञापकेन सामा-
न्यत आगमविषये आदेशो नेति ज्ञापनात् । अत एव तिसृणामित्यत्र
नुट्सिद्धिरिति बोध्यम् ( ङेरत्त्वे सत्याविति ) न च सन्निपातपरि-

भाषया टाबभावस्य वृद्धाविस्याद्याविषयात्रापि गुरुत्वमिति वाच्यम् न यासयोरिति निर्देशेन तदनित्यत्वज्ञापनात्। न चान्तरङ्गे टापि कर्तव्ये बहिरङ्गस्यासिद्धत्वमिति वाच्यम्, तन्निर्देशे नैवास्या अप्यनित्यत्व-ज्ञापनात्। न चाङ्गवृत्तेः पुनर्वृत्तावविधिरिति परिभाषया टाबभाव उपपाद-यितुं शक्य इति वाच्यम्, द्वयोरेकस्य निर्धारणे इत्यत्र द्वयोरित्येत्वनिर्दे-शेन तदनित्यत्वज्ञापनादिति दिक् (विभक्तौ लिङ्गेति) घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तन्मूलैवेति भावः । नन्वतिस्त्रियै इत्यादावस्त्रीतिपर्युदासात्कथं नदीसंज्ञेत्यत आह (अस्त्रीति त्विति) अत्र हेतुमाह तत्सम्बद्धस्यैवेति । इयङुवङ्स्थानाविति सम्बद्धस्यैवेत्यर्थः। नन्वथापि ह्रस्वस्य निषेधः कुतो नेत्यत आह (दीर्घस्यायामिति) तत्र ह्रस्व-पक्षाभावादिति भावः (प्रधीशब्दस्येति) अयं भावः आध्यै प्रध्यै ब्राह्मण्यै इत्यत्र नदीसंज्ञानिषेधमाशंक्य यत्र नदीकार्याश्रये अङ्गे बाधकाबाधिते यङ्वादिस्थितिस्तत्रैव निषेध इति समाहितम्भाष्ये, तदसङ्गतम् कैयटो-क्तनित्यस्त्रीत्वाभावात्। अतः स्त्रीविषयावेव यौ यू नित्यमिति भाष्ये एवकारो भिन्नक्रमः, नित्यमेवेत्यर्थः। नित्यमेवेत्यस्य पदान्तरं विना-पीत्यर्थः। पूर्वोक्तभाष्यप्रयोगे न बहुव्रीहिः कबापत्तेरिति वृत्तिकाराशयः। (कैयटमते इति) भाष्यप्रयोगे बहुव्रीहिरेव कप्तु न ऋकारसाहचर्य्येण यस्य वृत्तेः प्राङ् नदीत्वं तदुत्तरपदके एवेति प्रकृते धीशब्दस्येयङ्स्था-नित्वेन प्राङ् नदीत्वनिषेधात् नित्यमेवेत्यस्य पदान्तरम्विनापीत्यर्थो नाक्षरानुगुणः, ग्रामणीत्यादेः क्रियाशब्दत्वेपि पुंसि मुख्या वृत्तिस्तेनो-भयमतेऽपि न दोष इति बोध्यम्, ननु भ्रूशब्दस्य उवङ्स्थानित्वेन समुदायस्यापितत्वेन निषेधप्राप्त्या हे सुभ्रु इत्यत्र नदीत्वाप्राप्त्या ह्रस्व-त्वङ्कथमित्यत आह ( कथन्तर्हीति प्रमाद इति ) अनवधानलक्षणोऽत्र प्रमादः। स च विरहपोषकत्वात्काव्ये गुणः ( वहव इति ) केचित्तु नञ्घटितमनित्यमिति परिभाषया निषेधशास्त्रस्यानित्यत्वान्न दोष इति वदन्ति ॥ ननु रषाभ्यामिति सूत्रागतग्रहणानुवृत्त्यैव सिद्धे पूर्वपदात्संज्ञायामगः इति सूत्रे गग्रहणं किमर्थम् । न च णाभावकरणयो-

रित्यतो वाग्रहणाननुवृत्त्यर्थन्तदिति वाच्यम्, आरम्भसामर्थ्यादेव नित्यत्वसिद्धेः । अन्यथा प्रातिपदिकान्तेत्येव सिद्धेरित्याशयेनाह (आरम्भसामर्थ्यादिति) न तिसृचतसृ इति ज्ञापकेन सन्निपातपरिभाषया वा ङीबभावे सिद्धे तिसृचतस्रोः स्वस्रादिगणे पाठो न युक्तिकर इति दिक् ॥ ( इत्यजन्ताः स्त्रीलिङ्गाः समाप्ताः ) ॥ * ॥

एङ्ह्रस्वादिति सूत्रे भाष्यकृतवैयधिकरण्यान्वयस्य फलमाह (एङ्ह्रस्वादिति) अत एवमिति छेदो न, अन्यथा वैयधिकरण्यान्वयवैयर्थ्यापत्तेरिति भावः । (अजरांसीति) अत्र यद्वक्तव्यन्तन्निर्जरशब्दे उक्तम् । ननु अद्डादेशे पूर्वसवर्णदीर्घप्राप्तिरत आह (एङ्ह्रस्वादिति) सम्बुद्धिलोपश्च नेति । (मांस्पचन्या इति) न च लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि। समो वा हिततयो मांसस्य पचियुङ्घञोरित्यनेन सिद्धेः, प्रकारार्थफलश्चिन्त्यमिति वाच्यम्, ल्युडन्ते उत्तरपदे तद्विधानात्, पचनस्योत्तरपदत्वाभावात् तस्य प्रकारार्थसिद्धत्वानुवादकत्वाच्च । (श्रीपायेति) अत्र अत्वजातीयमुपजीव्यजायमानो यादेशस्तज्जातीयविघातके लोपेऽनिमित्तमित्याशयेन सन्निपातपरिभाषाप्रवृत्तिरिति भावः । (न लुमतेति निषेधस्यानित्यत्वादिति) अत्र इकोऽचीति सूत्रेऽचिग्रहणं मानम् । हलादि विभक्तौ सत्यपि नुमि नलोपेनैव सिद्धेः । सम्बुद्धौ तु नलुमतेति निषेधाद्विभक्तिपरत्वाभावादेवाप्राप्तेः । न चोत्तरार्थन्तद्ग्रहणमिति वाच्यम्, तत्रैव कर्तव्येऽत्र करणस्य सफलौचित्येन अनित्यत्वज्ञापनेनैव फलवत्त्वात्, अतएव हे त्रपो हे त्रपु इति भाष्योदाहरणं सङ्गच्छते इति दिक् ॥ (प्रवृत्तिनिमित्तभेदादिति) तत्त्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम्, एवञ्च वृक्षवाचकफलशब्दे वृक्षत्वस्य प्रवृत्तिनिमित्तत्वं, फलवाचके वृक्षप्रभवत्वमेव तत्त्वमिति । ननु कुतोयमर्थलाभ इति चेच्छृणु, भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहौ कृते सोऽस्यास्तीति अर्श

आदित्वाद्व, भावितपुंस्क इति तत्फलितमेव प्रवृत्तिनिमित्तैक्येति ॥

( इत्यजन्ता नपुंसकलिङ्गाः ) ॥ * ॥ * ॥ *

· श्रीसरस्वत्यै नमः ॥ भाष्ये धुगित्यत्र घत्वस्यासिद्धत्वाड्ढत्वमाशङ्क्य अपवादत्वेन समाधाय अथवैवं वक्ष्यामि होढोऽदादेरिति धातोर्घ इति च । अत्र योगे दादेरित्यनुवर्त्तते नेति च, निवृत्तमित्युक्तम् तत्रादादिधातोर्ढत्वविधानादेव दादिधातोर्घत्वमित्यर्थलाभे दादेरित्यनुवृत्तेः, फलान्तराभावात्तदौपदेशिकदादित्ववदुपलक्षकमित्याशयेन व्याचष्टे ( उपदेशे इति ) न च होढोऽदादेरिति न्यासे धुडित्यादौ ढत्वन्न स्यादिति वाच्यम्, वा द्रुहेति सूत्रे वाग्रहणस्य समुच्चयार्थकतां स्वीकृत्य ढग्रहणानुवृत्त्या ढत्वस्यापि विधानेनादोषात् । न चैवमपि दामलिडित्यादौ दादित्वेन ढत्वन्न स्यादिति वाच्यम्, उत्तरसूत्रे दादिपदेन औपदेशिकदादित्ववद्बोधनेनार्थाधिकारानुरोधात्पूर्वसूत्रेऽपि अदादिघटकदादिपदस्य औपदेशिकदादिधातुत्ववद्बोधनेनादोषात् मनोरमायां तु दादिपदावृत्त्या औपदेशिकलाभ इत्युक्तम्, तत्खण्डनप्रकारो विस्तरभयान्न लिखित इति दिक् । उपदेशफलम्पृच्छति ( उपदेशे किमिति ) अव्याप्त्यतिव्याप्तिपरिहाराय तदित्याशयेन समाधत्ते (अधोगित्यादि)अत्राडागमे दादित्वाभावाद् घत्वन्न स्यादित्यव्याप्तिः । दामलिडित्यत्र दादित्वाद् घत्वं स्यादित्यतिव्याप्तिरिति भावः ॥ ननु सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति सिद्धान्तात् । एकाज्रूपो यो धातुस्तदवयवस्येत्याद्यर्थे गर्द्धबित्यादौ न स्यादिति लक्ष्यानुरोधात्, वैयधिकरण्यमित्याशयेनाह ( एकाचो धातोरिति) ननु छन्दसीत्यनुवर्त्तमाने वहश्चेति विहितस्य ण्विप्रत्ययस्य लोके कथं विधानमिति लोके विश्ववाहशब्दस्य च कथं प्रयोग इत्यत आह ( छन्दस्येवेति ) न च णिजन्ताद्विचो विधानेऽपि सम्प्रसारणाप्राप्तिः अङ्गभसंज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणादजादिपरकाव्यवहितपूर्वस्य वाहः सम्प्रसारणमित्यर्थे णिचो लोपस्य स्थानिवत्त्वेन व्यवधानादिति वाच्यम्, वश्चग्रहणस्य ण्विपोपलक्षकत्वेनादोषात् । न चैवमपि

क्वौ लुप्तन्न स्थानिवदित्यस्य संकुचितविषयत्वेन क्वौविधिं प्रति न स्थानिवदित्यस्य क्विप्शब्दमुच्चार्य्य विहितविधावेव प्रवृत्तिस्वीकारेण वचिसुपीत्यस्य वच्यादिभ्यो विहिते क्तितीति व्याख्यानेन च णिजन्तात्क्वौ सम्प्रसारणाप्राप्तेरिति वाच्यम्, विभाषापूर्वाह्णेति सूत्रे प्रष्ठौह आगतं प्रष्ठवाड्रूप्यमिति भाष्ये लौकिकविग्रहे प्रष्ठौह इति प्रयोगेण लोकेऽपि क्वचिणिरवरिति कल्पनेनादोषादिति दिक् ॥ ननु नुमो विशेषविहितत्वेन व्याप्यविषयकतया सामान्यविहितस्य व्यापकविषयताकस्यामो येन नाप्राप्तिन्यायेन तक्रन्यायमूलकेन बाधे पुनरामेनेति चेदत आह ( आदित्यधीति ) एवं च अनडुहशब्दसम्बन्ध्यन्त्यावर्णात्परो नुम्भवतीत्यर्थे उपजीव्यत्वादामः पूर्वं नुमोऽप्राप्तिरिति भावः । यथा पितुरुत्पन्नः पुत्रः पितरं न हन्यात् एवं पिता पुत्रं न हन्यात्, उपजीव्योपजीवकभावस्य मुख्यत्वात्, तेन सम्बुद्धौ अमापि न नुम्बाध उपजीवकत्वात् ॥ ( दत्वन्नेति ) अनड्वांस्तत्रेत्यत्र रुत्वन्तु भवत्येव उपदेशवैयर्थ्याभावात्, यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते इति भाष्यात् । प्रकृते दत्वम्प्रति उपदेशस्य नुमोऽनर्थकत्वम् रुत्वविधेस्तु निमित्तत्वमेवेति । केचित्तु अतो विशेपेति प्रतीकमुपादाय इदन्न युक्तं, येन नाप्राप्तिन्यायेन नुमा सुलोपबाधाभावाय अवश्यमाश्रयणीयेन न्यायानित्यत्वेनैव नुम्विषये न्यायाप्रवृत्तौ परत्वादमामोः कृतयोर्नुमि दोषाभावेन आदित्यनुवृत्तिक्लेशो न कर्त्तव्य इति वदन्ति ( णत्वन्द्वित्वमिति ) ननु पूर्वत्रासिद्धमद्वित्वे इति परिभाषया द्वित्वे पूर्वत्रासिद्धमित्यस्याप्राप्तौ परत्वाद् द्वित्वे ततो णत्वमित्येव युक्तमिति वाच्यम्, सय्यँन्तेत्यत्र त्रियकारकरूपासिद्धये द्वित्वे परसवर्णत्वं सिद्धं वाच्यम्, इति वार्त्तिकेन वर्णद्वित्वे तदप्रवृत्तिज्ञापनात् । अन्यथा द्वित्वम्प्रति उक्तपरिभाषया पूर्वत्रासिद्धमित्यनेनासिद्धत्वाप्राप्तौ द्वित्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति । न च वाक्क् वाग्गिति भाष्योदाहरणसिद्धये वर्णद्वित्वेऽपि तत्प्रवृत्तिरावश्यकी अन्यथा पूर्वत्रासिद्धमित्य-

नेन चर्त्वात्पूर्वं द्वित्वे ततोऽन्त्यस्य चर्त्वेऽपि पूर्वत्र गश्रवणापत्तेः, न च खरि चेति चर्त्वेन सिद्धिरिति वाच्यम्, अवसानचर्त्वस्यासिद्धत्वात्, खर्परत्वाभावेन चर्त्वाप्राप्तेः । न च तत्रापि अवसानचर्त्वस्यासिद्धत्वेन गकारे झशिपरे पूर्वस्य जश्त्वे गश्रवणापत्तेः साम्यमिति वाच्यम्, न मुने इतिवत् द्वित्वे कर्त्तव्ये कृते च प्रत्यासत्त्या द्वित्वाश्रयस्य कार्य्ये कर्त्तव्येनाऽसिद्धत्वमित्यर्थं करणेन द्वित्वाश्रयस्य जश्त्वे कर्त्तव्येऽसिद्धत्वाप्राप्तेः।एवञ्च णत्वं द्वित्वमिति प्रकृतिग्रन्थासंगतिरिति वाच्यम्, पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कर्त्तव्येऽन्यस्यासिद्धत्वन्न द्वित्वन्तु असिद्धमेवेत्यर्थकरणेन द्वित्वात्पूर्वं णत्वे दोषाभावात् । एवञ्च पूर्वोक्तवार्त्तिकस्यानुवादकत्वकल्पनमुचितमिति दिक् । ( गौणत्वे नुट् नेष्यते इति ) बहुवचननिर्देशेन गौणेऽप्रवृत्तिरिति भावः । बहुवचनं लाघवार्थमिति केचित् ( कमल्ष्विति ) अल्लोपणिलोपयोः स्थानिवत्त्वन्तु न शक्यं पूर्वत्रासिद्धे तन्निषेधात् ॥ ( अकच्सहितस्यापीति ) अयं भावः त्यदादीनाम इत्यतस्त्यदादेरित्यनुवर्त्य त्यदादेरिमः अः स्यादित्यर्थेनैव सिद्धे ककारोच्चारणं किमर्थम् । न च त्यदादिप्रयुक्तकार्य्यस्य द्विपर्य्यन्तानामेव विधानेन कथं प्राप्तिरिति वाच्यम्, द्विशब्दात्प्राक्पाठेनादोषात् । न चालोऽन्त्यस्येत्यनेन अन्त्यस्य स्यादिति वाच्यम्, नानर्थकेऽलोऽन्त्यविधिरित्यनेन निषेधात् । स च कश्चेत्येकशेषे दोषोद्भावनं तु न युक्तम् अकच्सहितस्यादेशविधात्भाष्यप्रामाण्येनैकशेषे त्यदादीनां द्विपर्य्यन्तानामिति नियमस्य बाधात् । तादृशप्रयोगस्यानभिधानाच्च न च कुतिहोरित्याद्यर्थं किमः ककारोच्चारणमिति वाच्यम्, उतिहोरिति न्यासेनादोषात् । एवं क्वातीत्यत्रापि वातीति न्यासेनादोषः । एवं सिद्धे ककारोच्चारणं व्यर्थं सत्साकच्यादेशविधानार्थम्, अन्यथा इमोऽकारविधानं कक इति स्यादिति । न च भिन्धकीत्यत्राकचि कृते धित्वं न प्राप्नोति निर्दिश्यमानपरिभाषयेत्याशंक्य अन्तरङ्गत्वाद् धित्वे सतोऽकाजिति भाष्येण अकाज्विशिष्टस्य निर्दिश्यमानत्वाभावात्

कथमादेश इति वाच्यम्, किमः क इत्यावृत्त्या साकच्कस्यादेश इति कैयटोक्तसमाधानेनैव समाधानमित्यदोषात् । वस्तुतस्तु अकचि धित्वं न प्राप्नोतीति भाष्यस्य अकच्स्त्वकं धित्वं न प्राप्नोति निर्दि-श्यमानपरिभाषया सम्पूर्णस्य स्यादित्याशयः। अत एव अनाप्यक इत्यादिसूत्रे कोकोरिति चरितार्थम्। अन्यथा तन्मध्यपतितन्यायबोधितस्य निर्दिश्यमानत्वाभावादेवाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेति दिक् ॥ नन्वस्मै इत्यादौ परत्वादनाप्यक इति स्यादत आह ( अत्वान्नित्यत्वादिति ) कृताकृतप्रसंगी यो विधिः स नित्य इति स्मैआदेशस्य नित्यत्वं, न चानाप्यक इत्यस्यापि कृताकृतप्रसंगित्वेन नित्यत्वमिति वाच्यम्, लक्ष्या-नुरोधात् बाधकाबाधितकृताकृतप्रसंगित्वस्यैव नित्यत्वम् स्वीकारात्, प्रकृतेऽनाप्यक इत्यस्य हलि लोप इत्यनेन बाधितत्वात् ॥ नन्वनुदात्त-मात्रविधानेन हलि लोप इत्यनेन लोपेनैव सिद्धे अश्विधानं किमर्थ-मित्यत आह ( अश्वचनमिति ) न च त्यदादीनाम इत्यनेनैव सिद्धे अकारविधानमेव साकचि सर्वादेशार्थं भविष्यतीति शित्वं व्यर्थमिति वाच्यम्, सुपि चेति दीर्घाभावस्याप्यनेन, ज्ञापनसंभवात्, अतः स्पष्ट-प्रतिपादनार्थमश् विधानमिति बोध्यम् । वस्तुतस्तु अ अ इति प्रश्लेषे-णाकारद्वयविधानात्सर्वादेशत्वासिद्धे शकारोच्चारणं व्यर्थमिति बोध्यम् ॥ नन्वल्लोपस्य श्चुत्वे कर्त्तव्ये पञ्चमीसमासपक्षे स्थानिवत्त्वात् श्चुत्वन्न स्यादित्याशयेनाह ( न चेति यथोद्देशपक्षे इति ) तत्पक्षे हि या संज्ञा या परिभाषा यत्रोत्पन्ना सा तद्देशगामिनी भवतीति अस्याश्च वाह ऊठिति ऊठ्ग्रहणेन ज्ञापितत्वेन षाष्ठीत्वात् त्रैपादिकान्तरङ्गस्य श्चुत्वस्य परिभाषादृष्ट्या-सिद्धत्वादन्तरङ्गाभावेन कम्प्रति कस्या-सिद्धत्वम्प्रतिपाद्येत कार्य्यकालपक्षेण दोषोद्भावनन्तु न युक्तम्, एक-तरपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्य भाष्येऽनाश्रयणात् । वस्तुतस्तु कार्य्यकालपक्षेऽपि तदप्रवृत्तिः पूर्वं निरूपिता ॥ ( माध-वेनोक्तमिति ) भसंज्ञायामल्लोपे उत्तरपदमनच्क इति एकाज्सुत्तरपदे इत्यस्याप्राप्त्या प्रातिपदिकान्तेति वैकल्पिकणत्वमिति, तेनोक्तम् तन्न

युक्तं पञ्चमीसमासेन स्थानिवत्त्वात् पञ्चमीसमासानित्यत्वाभिप्रायकं, तस्य दोष इत्यत्र णत्वग्रहणप्रत्याख्यानाभिप्रायकं वा प्रातिपदिकान्तेति णत्वमिपि न युक्तं, तथाति कुमति चेति नित्यस्य जागरूकत्वात् ( भाष्येति ) कुव्यवाये हादेशे णत्वप्रतिषेधो वक्तव्यः, किं प्रयोजनं वृत्रघ्नः स्रुघ्नः प्राघ्नाति हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यम्भवतीति भाष्ये उक्तम् । न च सूत्रसत्त्वे प्रघ्नाघ्न इत्यत्र णत्वं तद्भावे न स्यादिति वाच्यम्, इदमत्पूर्वग्रहणं इत्यानिककवर्गाभावबच्छन्तेरुपलक्षणमित्यदोषात् । अत एव योगविभागमूलकवार्त्तिकप्रत्याख्यानेऽपि न फलभेद इति बोध्यम् ॥ बहुलग्रहणेनासिद्धत्वाभावकल्पने मानमाह ( तथा चेति ) श्वन्नुक्षन्निति सूत्रेण कप्रत्ययो,मद्देहकारस्य च कारो बुगामश्च निपातनान्मघवा इत्यादि रूपम् । धनार्थकान्मघशब्दान्मतुपि अत्वसन्तस्येति दीर्घे मघवानित्यादि रूपं संसाध्य इदं सूत्रं कैयटेन प्रत्याख्यातम् । अन्यथा सूत्रसत्वे मघवन्नित्यादि, तद्भावे मघवानित्यादीति फलभेदापत्तेरत एव "अर्थवास्तुमघोनश्च न शिष्यं छान्दसं हि तत् ॥ मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात् ॥" इत्यत्रत्यवार्तिकं संगच्छते,अनेन च वार्त्तिकेन लोके मघवच्छब्दस्य प्रयोगोऽनभिधानामिति केचित् आसिद्धत्वाभावकल्पने कविप्रयोगानुकूल्यमप्याह (हविर्य्यच्चितीत्यादि) अत्रानसाविति छेत्रे तु मघवानृजिषीत्यादि प्रयोगो बोध्य इति दिक् ॥ ननु युवन्शब्दे समकालमेवोभयोः संप्रसारणप्राप्तौ निषेधो व्यर्थः । किञ्च उकारद्वयस्य दीर्घेऽल्विधित्वेन स्थानिवत्त्वाप्राप्तौ सूत्राप्राप्तिः । किञ्च लक्ष्ये लक्षणस्येति न्यायेन पुनः संप्रसारणप्राप्तौ निषेधो व्यर्थ एवेत्यत आह (अत एवेति) दीर्घस्याप्यत एव ज्ञापकात्स्थानिवत्त्वम् । अचः परस्मिन्निति स्थानिवत्वेन व्यवधानन्तु न शक्यम् सूत्रवैयर्थ्यात् लक्ष्ये लक्षणस्य तु लक्ष्यभेदेन प्रवृत्तिस्वीकारात्,अत एव पटत्सन्त इत्यत्र पुनश्चर्त्वासिद्धिः कार्य्याश्रयणभेदात् यमुद्दिश्य पूर्वं विहितस्तमुद्दिश्यैव पुनः प्रवृत्तौ तन्न्यायविषयादिति दिक् ॥ ननु तपरस्तत्कालस्येति सूत्रस्य विधी-

यमानेपि प्रवृत्तिस्वीकारात् सवर्णग्रहणे नकारस्थाने जायमान आन्तरतम्यादनुनासिक एव भविष्यतीत्यत आह ( आ आदिति ) । प्रश्लेषेणा शुद्धाया एव आत्वक्तेर्विधानान्न सर्वादेशत्वशंकापि भाव्यमानेति निषेधस्तु न, भाव्यमानोऽण् सवर्णान्न गृह्णातीति पाठात्, तपरसूत्रानिषेधकत्वाच्चेति प्राञ्चः । वस्तुतस्तु भाव्यमानेति परिभाषाया जातिग्रहणप्राप्तस्य गुणाभेदकत्वप्राप्तस्य अणुदित्सूत्रप्राप्तस्य तपरसूत्रप्राप्तस्य च निषेधकत्वात् ॥ (शतानीत्यादि) कृतैकशेषस्य प्रयोगोऽयम् अन्यथा विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोरिति विरोधाद्बहुवचनानापत्तेः ( सन्निपातेति ) न च उपदेशे यौ षकारनकारौ तदन्त इत्यर्थे न दोष इति वाच्यम्, सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति निषेधात् उपदेश इत्यस्याप्रकृतत्वाच्च ॥ ननु हलादावात्वविधानेनाष्टौ इत्यत्र कथमात्वमत आह (अष्टभ्य इति) कृतात्वानिर्देश इति कृतात्वानुकरणमित्यर्थः । न तु लक्षणसम्पन्नमात्वम् । गौरवादिति समाधानन्तु न युक्तं पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते इति भाष्यात् ( अष्टनो दीर्घादिति) दीर्घान्तादष्टनः परासर्वनामस्थानविभक्तिरुदात्तेति तदर्थः । अस्य नित्यत्वे हि दीर्घग्रहणं व्यर्थं स्यात्॥(गौणत्वे आत्वाभावे इति)इदं प्राचामनुरोधेन,वस्तुतस्तु यथालक्षणमप्रयुक्त इत्यत्रत्यभाष्यादस्यानभिधानम्बोध्यम् । (न ष्टुत्वमिति ) न च पूर्वत्रासिद्धे इति निषेधात्कथं स्थानिवत्त्वमिति वाच्यम्,तस्य दोष इत्यादि निषेधात् । न चात्र प्रतिपदोक्तणत्वस्यैव ग्रहणान्न तु ष्टुत्वेन लभ्यस्येति वाच्यम्, मानाभावात् । णत्वविधायकसूत्रे मूर्द्धन्यपदानुवृत्त्या णग्रहणस्य भाष्ये प्रत्याख्यानेन प्रतिपदोक्तालाभाच्च, ननु पञ्चमीसमासस्य फलाभावेनास्वीकारात् कथन्न ष्टुत्वमित्यत आह ( कार्य्यकालेति ) प्राचीनमते तत्पक्षे त्रिपाद्यामपि तत्प्रवृत्तेः । वस्तुतस्तु पञ्चमीसमासस्य फलं प्राङ् निरूपितम् । ( अनुमीयमानमिति ) बहुवचननिर्देशाद्रोणोऽप्रवृत्तिरिति भावः । ननु षत्वादीनामसिद्धत्वाद्राट्शब्दपरत्वाभावादत आह ( राडिति अविवक्षितमिति ) सामर्थ्या-

दिति भावः ॥ ननु शीशिलुकनुम्विधिभ्यो युष्मदस्मदादेशाः पूर्वविप्रतिषेधेनेति वार्त्तिकेन लिङ्गवत्त्वबोधनादलिङ्गे युष्मदस्मदी इत्यनुपपन्नमत आह ( यद्वेति ) एवं च अलिङ्गे युष्मस्मदी इत्यस्य पदान्तरसन्निधानं विना युष्मदस्मद्शब्दमात्रान्न किमपि लिङ्गं प्रतीयत इत्यर्थ इति न तस्य वैयर्थ्यम् (शेष इति सप्तमीति) अयम्भावः ससुट्कानिर्देशेन शेषे लोप इत्यस्यावृत्त्या एकेन मूलोक्तार्थलाभः, द्वितीयेन आत्वयत्वविधायकस्य विशेषविहितत्वेन तद्विषयातिरिक्तविषयतया शेषपदेऽधिकरणत्वविवक्षया सप्तमीविधानान्मपर्य्यन्ताच्छेषस्य लोप इत्यर्थलाभ इति ॥ भाष्ये तु न चादेशो हलादिरस्ति इति स्वीकृत्य भ्यमादेशो अभ्यमिति छित्वाऽन्त्यलोपपक्षस्यैवादरात् । न चात्र पक्षे श्याद्यादेशः स्यादिति वाच्यम्, सन्निपातपरिभाषया तद्वारणात्, अम उपजीव्यजायमानान्त्यलोपस्य तद्विघातकश्याद्यादेशे कथं निमित्तत्वं स्यात् ॥ ( अन्तरङ्गे इति ) न च वार्णादाङ्गपरिभाषया लोप एव भविष्यति । न च समानकार्य्यित्वे एव तद्विधानात्तदभावेन तस्या अप्राप्तिरिति वाच्यम्, वार्णशास्त्रीयस्थानितासमानाधिकरणस्थानिताकत्वरूपसमानाश्रयत्वस्योभयत्रापि साम्यात् । कार्यद्वयेऽकारस्याश्रयणादिति वाच्यम् । स्योन इति भाष्योदाहरणेन तस्या अनित्यत्वज्ञापनेनादोषात् । अन्यत् सर्वं सुगममिति दिक् ॥ ( मपर्य्यन्तस्य किमिति ) अधिकारसूत्रं किमर्थमिति प्रश्नः । युवकामिति, ननु ओकारभकारसकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् अन्यत्र, तु सुबन्तस्य टेरिति त्वयकेत्यादि सिद्ध्यर्थमवश्याश्रयणीयेन वार्त्तिकेन युवामित्यादि सिद्ध्युत्तरमकचि न दोष इत्यत आह ( त्वयेत्यादि ) नन्वत्रापि योचीत्यत्राच्योरिति न्यासेन न दोष इत्यत आह ( युवकाभ्यामिति ) अत्र भकारादिसुपः सत्त्वेन पूर्वमेवाकचि सर्वादेशापत्तिरिति दिक् ॥ ननु अन्त्यलोपपक्षे स्थानिवत्त्वेन जस्बुद्ध्या श्यादेशः कुतो नेत्यत आह ( इह शेष लोप इति ) ननु द्वयोरित्यादिनिर्देशे-

नाघदयाश्रयणायेनास्या अनित्यत्वेनैव श्यादेशः कृतो न, किञ्च अंगोद्देश्यककार्य्ये पुनरङ्गोद्देश्यककार्य्यन्नेत्यर्थवर्णनात्प्रकृतपरिभाषाया अप्रवृत्तिः । किं च लक्ष्यसंस्काराय भाष्ये क्काप्यस्या आश्रयणाभावेन श्यादेशः स्यादेवेत्यत आह ( ङेप्रथमयोरिति ) ङेप्रथमयोरम्शसो नेति संहितया पाठ इति भावः । अतः संयोगान्तलोपे झल्ग्रहणानुवृत्यापि न दोष इति बोध्यम् । वस्तुतस्तु प्रश्लेषस्य भाष्यादावदृष्टतया तदभावे-पि सन्निपातपरिभाषया श्यादेशाभावः सुकर इति दिक् ॥ (आद्ये शेषे लोप इति) भ्यमादेशपक्षे इति भावः । अङ्गवृत्तपरिभाषयेति एतत्परिभाषाभावेऽपि अभ्यमादेशस्यैव भाष्यसिद्धतया न दोषः(पक्षद्वयेऽपीति) न चान्त्यलोपे एकादेश उदात्तेनोदात्त इत्यनेन युष्मभ्यमित्यत्र युष्मोत्तराकार उदात्तः, टिलोपे अभ्यम अनुदात्ततयाऽनुदात्तस्तदकार इति फलभेद इति वाच्यम्, यस्मिन् अनुदात्ते परे उदात्तो लुप्यते स अनुदात्त उदात्तो भवतीत्यर्थकेन अनुदात्तस्य च यत्रोदात्तलोप इत्यनेन फलाभेदादत एव भाष्ये यदि भ्यमादेशस्तर्हि शेषे लोप इत्यन्तलोपे एत्वं प्राप्नोति, अथ अभ्यमादेशस्तर्हि शेषे लोप इति टिलोपे उदात्तनिवृत्तिस्वरः स्यादित्याशंक्य यथेच्छसि तथास्त्विति समाहितमिति दिक्॥ ननु शेषे लोप इति लोपे आत्वयत्वनिमित्ततरविभक्तेरपेक्षणादन्त्यलोपाभावेनादन्तत्वाभावात्सुटोऽप्राप्तौ साम्रूपालाभादाकमोऽप्रवृत्तिः सूत्रासंगतिश्चेत्यत आह ( भाविन इति ) अयं भावः यथास्तेर्भूरित्यनेनार्धधातुकविषये भूप्रयोगो अस्तेरप्रयोगे बोध्यते एवमनेनापि सुडामोरत्यन्तमप्रयोगबोधनात् । न च साम्रूपाभावात् कथमस्य प्राप्तिरिति वाच्यम्, साम्बुद्धौ आकम्बुद्धिः कर्त्तव्येत्यर्थात्, साम्बुद्धेस्तु साम्प्रतिक्याअभावेऽपि भाविन्या ग्रहणं अर्थाच्छेषे लोप इत्यन्तलोपे प्राप्तस्येति भावः । न च पूर्वरीत्या कदापि साम्बुद्धेरसम्भव इति वाच्यम्, वैयाकरणमते आहार्य्यारोपस्यापि कार्य्यप्रवृत्तौ नियामकतया आम्येव साम्त्वस्याहार्य्यारोपात् बाधसमानकालीनेच्छाजन्यज्ञानमाहार्य्यारोपः प्रकृते च आम्येव साम्त्वारोपणादेशेऽन्त्यलोपेऽपि न सुटः प्राप्तिः

स्थानिवत्त्वेन साऽत्वमेव न त्वाम्त्वम् एतावतैव सुटो निवृत्तिरिति।

केचित्तु साम्पदे तन्त्रेणामोऽपि निर्देशात्पूर्वमाम आकमितितोऽन्त्यलोपे सुटि सामो लाभे तस्याप्याकम्। अत एव अतित्वाकमित्यादि गौर्यो-ऽप्याकम्सिद्धिरिति वदन्ति तदसत् ऋजुमार्गेण सिद्धे को नाम महा-पातकं गौरवं सहेत। केचित्तु आम आकम् इत्येव सिद्धे सकारोच्चा-रणं किमर्थमत आह ( भाविन इति ) अन्यथा आकमि स्थानिवद्भा-वेनामबुद्धौ सुडागमापत्तेरित्याशयं वर्णयन्ति। वस्तुतस्तु आमो ऽाकम इति न्यासेन सिद्धे एतत्प्रयासो विफल इति। न चाकारोच्चारणसा-मर्थ्यात्पररूपाभावे अकमविधानेनैव सिद्धे दीर्घोच्चारणं व्यर्थमिति वाच्यम्,सत्वनिवृत्त्याऽकारोच्चारणस्य चारितार्थ्येन पररूपबाधे माना-भावात् इति संक्षेपः॥ त्वमावेकवचने युवावौ द्विवचने इत्यनयोरर्थप-रत्वेन व्याख्याने फलमाह ( समस्यमाने इति ) समासार्थोऽन्यपदार्थः अन्यसंख्यः युष्मदस्मच्छब्दगतसंख्येतरसंख्यक इत्यर्थः॥ ( येदेत्वो-पेरिति ) अत्रैकादेशविशिष्टस्य पूर्वान्तवद्भावेन पूर्वपदत्वात् समानित्य-स्यैकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्दत्वादादेशः स्यादिति भावः॥ ननु तदन्तविधिनैव सिद्धे स्थग्रहणं व्यर्थमत आह ( स्थग्र-हणादिति)अत्र स्थशब्दोऽहानौ यथा"समये तिष्ठ सुग्रीव मा वालिपथ-मन्वगाः॥ नायं संकुचितः पन्था येन वाली हतो गतः" इति रामायणे समयं माहासीरित्यर्थकः स्थाधातुः। ( युवयोर्युष्माकं वा पुत्र इति ) समासे प्रत्ययलक्षणेन तदन्तत्वादादेशः स्यादिति भावः॥ ( एकतिङ् वाक्यमिति ) एकतिङन्तार्थनिष्ठमुख्यविशेष्यताकबोधजनक इत्यर्थः अत एव पचति भवतीत्यस्यापि समानवाक्यत्वसिद्धिः। अत एव तिङ्ङतिङ इति सूत्रे तिङिति पर्य्युदासः सार्थकः॥ ननु तृतीयानिर्दे-शेनैव सिद्धे नचवेति सूत्रे युक्तग्रहणं व्यर्थमत आह(युक्तग्रहणादिति) परंपरासम्बन्धेप्ययमिति साक्षात्सम्बन्धे प्रवृत्तिरित्येतद्बोधकयुक्तग्रह-णाभावादिति भावः॥ ( सर्वेषां निघात इति ) निघातः प्राप्त इत्यर्थः केषाञ्चित्पदात्परत्वाभावात्केषाञ्चित्पदादित्वाभावान्न सर्वेषां विधान-

मिति बोध्यम् । तिङन्तानिघातः तिङ्ङतिङ इत्यनेन आमन्त्रितनि-
घातः,आमन्त्रितस्य चेत्यनेनेति ॥ ननु प्रतीच इत्यादौ लोपस्य बहिर्भू-
तनिमित्तत्वेन बहिरंगत्वादन्तरङ्गेण यणा भाव्यमत आह ( अच
इतीति ) अकृतव्यूहेति बहिरङ्गेणान्तरङ्गनिमित्तविनाशे पश्चात्स-
म्भावितेऽन्तरङ्गशास्त्रन्न प्रवर्त्तते इत्यर्थः । एतत्परिभाषाभावे तु चौ
प्रत्यङ्गस्य प्रतिषेधो वक्तव्य इति वार्तिकेन सिद्धमलुप्ताकारनकारेश्चतौ
प्रत्यङ्गस्य बहिरङ्गस्याप्रवृत्तिरिति तदर्थः ॥ ( आन्तरतम्यादिति )
सूत्रे उपदे ह्रस्वदीर्घयोः समाहारद्वन्द्वे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते
सवर्णदीर्घे नपुंसकह्रस्वत्वम्, तेन ह्रस्वदीर्घयोर्विधानसिद्धिरिति भावः
वस्तुतस्तु अपरनिमित्तकत्वेनान्तरंगत्वात्पूर्वं ह्रस्वे ततो दीर्घे ऊ इति रूपा-
पत्तिः । अत एव ऊकाल इति निर्देशः संगच्छते । एवं च प्रकृते का गति-
रिति चेच्छृणु भाव्यमानोप्युकारः सवर्णान् गृह्णातीति परिभाषया
दीर्घस्यापि ग्रहणाद्रूत एव दिव उत ऋत उदिति तपरकरणं सार्थक-
मिति दिक् ॥ ( अन्त्यबाधे इति ) अन्त्यस्य कार्य्याप्राप्तौ अन्त्यसदेश-
स्यैव कार्य्यं भवतीत्यर्थः । अन्त्यसदेशत्वञ्च अन्त्यवर्णतद्वर्णयोरित-
राव्यवधानत्वम् । यथाद्रशब्दस्य अन्त्यवर्णो यकारादिस्तद्वर्णो द्रशब्द-
स्तस्येतराव्यवधानत्वादन्त्यसदेशत्वम् ॥ ( लत्ववदिति ) यथा चली-
क्लृप्यते इत्यादौ रीङ्ऋकारयोरुभयोरपि कृपो रो ल इति लत्वन्तथैवेति
भावः ॥ ( विष्वग्देवयोः किमिति ) चस्याप्युपलक्षणमिदं चेन सर्व-
नाम्नः परामर्शात् ॥ ( विष्वगञ्चनमिति ) नन्वत्र उत्तरपदाधिकारा-
दञ्चुरूपे उत्तरपदे विधानान्न दोष इत्यत आह अप्रत्ययग्रहणमिति ।
तदादिविधिज्ञापनेन अञ्चादावुत्तरपदे इत्यर्थेऽत्रापि स्यादतोप्रत्ययग्रह-
णस्य स्वांशे चारितार्थ्यम् । ज्ञापनफलं च अतः कृकमीत्यत्रापि तदादि-
विधौ करोत्यादावुत्तरपदे इत्यर्थादयस्कार इत्यादौ सत्वसिद्धिः ।
अन्यथा अयस्कृदित्यादावेव स्यादिति भावः॥(धातोरप्यत्वन्तस्येत्यादि)
सन्निहितत्वादसन्तस्येति धातोरेव विशेषणमिति केचित् । वस्तुतस्तु
संभवव्यभिचाराभ्यां स्याद् विशेषणमर्थवदित्यभियुक्तव्यवहारादत्व-

न्तविशेषणासंभवः। अत एवात्विति लुप्तषष्ठीकं पृथक् पदमिति बोध्यम्। न च उकारस्यानुबन्धतया सर्वत्रात्वन्तत्वाभाव इति वाच्यम् सूत्रेऽतोराश्रयणसामर्थ्यात्सांप्रतिकाभावे भूतपूर्वगतेराश्रयणान्न दोषः न च एकानुबन्धपरिभाषया सर्वादिपठितभवतुशब्दे चरितार्थस्यास्य कथमत्र प्राप्तिरिति वाच्यम्, यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धकताया एवाङ्गीकारात् प्रकृते अतुशब्दस्य ह्यनुबन्धकत्वाभावात् नहि अतुशब्दोपदेशयुक्ता कस्यापीत्संज्ञा, किन्तु अतशब्दप्रयुक्तेति बोध्यम्। न च भूतपूर्वगतेराश्रयणेऽत्रातुवन्तत्वमेव, नात्वन्तत्वमिति वाच्यम् सूत्रे तस्यानाश्रयणादिति दिक्॥ ननु क्यजन्तादि गोमच्छब्दस्य धातुत्वेन कथं नुमागम इत्यत आह ( उगिदचामिति ) अयं भावः सूत्रेऽधातुग्रहणं किमर्थं न च धातोरपि नुमापत्तिरिति वाच्यम्, अच्ग्रहणसामर्थ्याद्धातोश्चेदुगित्कार्य्यन्तर्ह्यञ्चतेरेवेति नियमात्। धातोरप्राप्तौ पुनर्धातुग्रहणं व्यर्थं सत् अधातुभूतपूर्वस्य नुम् भवत्येवेति ज्ञापयति। तेन गोमतः सम्प्रतिधातुत्वेपि तत्कालिकधातुत्वाभावान्नुम् सिद्धिरिति॥ ( षत्वापवादत्वादिति ) अयमाशयः क्विन्प्रत्ययस्येत्यत्र कुः क्विन्यतः इति न्यासे इष्ट इत्यध्याहारेण बहुव्रीहिफले लब्धे प्रत्ययग्रहणं वीप्सागर्भबहुव्रीहिलाभार्थं, तेन प्रतिलक्ष्यलक्षणोपप्लवेन क्विन्नन्ततादृशादिलक्ष्यविषयकस्यास्याचारितार्थ्येन षत्वबाधे कुत्वमेवेति। भाष्ये तु प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकतयोक्तत्वेन अलं भाष्यविरुद्धकल्पनया लक्ष्याणामन्यथापि सिद्धिरिति दिक्॥ ननु सर्पींषीत्यादौ षत्वप्राप्तिवेलायां नुमोऽभावेन षत्वार्थमवश्यं नुम्ग्रहणमनुस्वारोपलक्षणार्थमित्याश्रयणीयं स्यात्। एवञ्चानुस्वारस्य शर्त्वेनैव गतार्थत्वान्नुम्ग्रहणं व्यर्थमिति चेन्न अनुस्वारव्यवधाने चेत्षत्वम् नुम्स्थानिकेनैवेति नियमार्थत्वात्। अत एव मस्थानिकानुस्वारव्यवधाने पुंस्वित्यादौ न षत्वमित्याशयेनाह ( नुम्ग्रहणमित्यादि सेदिवानिति ) सदेर्लिटि तस्य क्वसुः द्वित्वे अत एकेति एत्वेऽभ्यासलोपे इटि च सिद्धम्। नन्वत्र पदसंस्कारपक्षे सेदवसअस् इति स्थिते पूर्वोपस्थितिनिमित्त-

षत्वेनान्तरंगत्वादिटि संप्रसारणाप्राप्तेरत आह ( अन्तरंगोपीडागम इति) संप्रसारणेनेटो निमित्तस्य वलादित्वस्य विनाशभावित्वेनाकृतव्यू-हपरिभाषया इटोऽप्राप्तेरिति भावः। एतत्परिभाषाऽभावे तु इट्संप्रसार-णयोः प्राप्तौ संप्रसारणस्य प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं सम्प्रसारणे इटोऽप्राप्तिरेव फलितेति भावः। ( महच्छब्दसाह-चर्य्यादिति ) न च आचारक्विबन्तादिना महतोऽपि धातुत्वसंभव इति वाच्यम्,औपदेशिकस्यैव धातोर्ग्रहणेनादोषात्। अनङ्सावित्यत्र सोर्डा इति न्यासेन सिद्धेऽनङ्विधानं क्वचिदन्यतोऽपि भवतीति ज्ञापनार्थन्ते-नोशनःसंबुद्धौ अनङ् सिध्यतीति प्रांचः। तत्फलितमाह अस्य संबुद्धा-वित्यादि वस्तुतस्तु सोर्डेति न्यासे पुरुदंसेत्यत्र सोर्डादेशे टिलोपे सान्तमहत इति दीर्घापत्तेः, संज्ञापूर्वको विधिरनित्य इति अंगवृत्तीति वा परिभाषा भाष्येनाश्रिता एवं चापूर्वमेवेदं वार्तिकमिति बोध्यम्। फक्किकामर्मविवृतौ हलन्तपुँल्लिङ्गप्रकरणं समाप्तम् ॥

सर्वावदिति सर्वाशब्दवदित्यर्थः। शब्दपरस्य कदापि सर्वनाम-त्वाभावान्न सर्वनाम्नो वृत्तिमात्रे पुंवद्भावश्च इत्यस्य प्रवृत्तिः ॥ ननु विमलाद्दिवीत्यत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य राजपुरुष इत्यादौ राजादेः पूर्वपदस्येव उत्तरपदस्यापि पदसंज्ञा कुतो नेत्याशयेनाशंक्य ( उत्तरपदत्व इत्यादिना समाधयति ) तत्रोत्तरेति लुप्तषष्ठीकं पृथक्-पदन्तच्चोत्तरपदे लाक्षणिकम्, पदत्व इत्यस्य प्रकृतिजन्यबोधे प्रकारी-भूतो भाव इति नियमात्प्रत्वनिमते पदसंज्ञायामित्यर्थः। नवीनमते पदत्वप्रयुक्ते इत्यर्थः। अत्र युक्तायुक्ते विस्तरभयान्न विचारिते। अपदादिविधावित्यस्य पदादिविधौ त्वयं निषेधो न प्रवर्त्तते तेन दधि-सेचावित्यत्र सिंचतीति सेक्,दध्नः सेक् दधिसेगिति समासेप्यन्तर्व-र्तिविभक्त्या सेचः पदत्वेन सात्पदाद्योरिति षत्वनिषेधःसिद्धः।(अहन्नि-त्यावर्त्यैति ) आवृत्तौ मानन्तु रूपरात्रिरथन्तरेष्वहनो रुत्वं वाच्यमिति वार्त्तिकमेव,अन्यथा नलोपे अकारस्य रोरेवाविशेषाभावेन रत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति। न च संबुद्धौ नलोपाभावेन तत्रास्य चारितार्थ्येन

कथं ज्ञापकत्वमिति वाच्यम्, सत्यपि संभवे बाधनं भवतीति न्यायः संबुद्धिविषयेपि प्राप्तिमात्रेण रुत्वरत्वयोर्येन नाप्राप्तिन्यायेन नलोपापवादत्वात् । अत एव अपवादो रुर्नलोपं बाधिष्यते इति भाष्य उक्तम् (इह हल्ङ्यादिलोपे इति ) अकृतव्यूहपरिभाषया हलङ्यादिलोप एवेति भावः । वस्तुतस्तु प्रत्ययलक्षणेन निमित्तविनाशाभावात् तस्या अनित्यत्वादसत्वाच्च पूर्वमेव परत्वाद्दीर्घः । अत एव परत्वादुपधादीर्घ इति संगच्छते ( रज्जुसृड्भ्यामिति ) अनेन भाष्यप्रयोगेण अव्ययपूर्वपदे केवले च कुत्वम्,अनव्ययपूर्वपदे षत्वमिति बोध्यते । ननु काम्यच्सूत्रे उपयट्काम्यति उपसृट्काम्यतीति भाष्यप्रयोगविरोध इत्यत आह (यद्वेति ) पदान्ते षत्वमिति झलि परे तु विशिष्यविधानाद्यष्टव्यमित्यादौ चारितार्थ्येपि न दोष इति भावः । जायन्ते नव सौ तथामि च नव भ्यांभिस्भ्यसां संगमे षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तच्छसि। चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि वै जानन्ति प्रतिभास्ति चेन्निगदितुं पाण्मासिकोत्रावधिरिति तार्किकप्रश्ने आह (गवाक्शब्दस्य रूपाणीति ), अश्वाब्धिभूतानीति सप्तविंशत्यधिका पंचशतीत्यर्थः । तथाहि अनचि चेति द्वित्वे सप्तसोरष्टादश औकारे द्वित्वे गलौ षट् पूजायामेकमिति सप्त । जश्शसोः द्वित्वे अणो प्रगृह्यस्येति अनुनासिके च द्वादश टा ङे ङसि ङस् ओस् आम् ङि ओस् एतेषु ककारविसर्गमकाराणां द्वित्वे अणोऽप्रगृह्यस्येत्यनुनासिके च यथासंभवं अष्टादीनि रूपाणि भ्याम्भ्यसोः अनचि च यणो मयो द्वे वाच्ये इति द्वित्वे अष्टचत्वारिंशत्, भिसि अनचिचेति द्वित्वे चतुर्विंशति रूपाणि सुपि पूर्वोक्तयथासंभवकार्ये षडधिकनवतिरूपाणीति स्वयमूहनीयम् । इति नपुंसकम् ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥

ननु कथमव्ययानामलिङ्गत्वं सदृशं त्रिष्विति श्रुत्या लिङ्गवत्त्वबोधनादत आह सदृशं त्रिष्विति ॥ (इत्यव्ययानि ) ॥ * ॥ * ॥

ननु अजादिगणेऽकारान्तशब्दपाठः किमर्थः,अत इत्येव सिद्धेरत आह अजाद्युक्तिरिति अजादावुक्तिरित्यर्थः । अथवा अजादिग्रहणं किमर्थम्-

कारान्तत्वादेव सिद्धेः।न च कुंचादिहलन्तशब्दार्थमिति वाच्यम्,कुंचा-
नालभेत उष्णिहककुभौ देवविशमित्यादिप्रयोगेण कुंचादीनामप्यद-
न्तत्वादत आह (अजाद्युक्तिरिति)अजादेरुक्तिरिति समासः। बाधना-
येति येन नाप्राप्तिन्यायेनेति भावः। तेन टापि कृतेपि न ङीबादेः
शङ्कापि। ( अतः खट्वेति ) न चात्र स्तनकेशवती स्त्री स्याल्लोमशः
पुरुषः स्मृत इत्यादिकोशबोधितस्त्रीत्वस्याभावेन कथं टाबिति
वाच्यम्, सत्वादीनां गुणानामुपचयापचयसाम्यं क्रमेण पुंस्त्वादि-
लिंगप्रयोजकमिति भाष्यसिद्धमर्थनिष्ठं स्त्रीत्वमत्राप्यस्तीत्यदोषात्।
ननु प्रत्ययः परश्चेत्यधिकारात्परशब्दयोगे अन्यारादितरर्त्ते इत्यादिना
पञ्चमीविधाने प्रातिपदिकादित्यनेन सामानाधिकरण्यात्तदन्तविधौ
अजाद्यन्तात्प्रातिपदिकादित्यर्थो युक्तः। स्त्रीत्वं च प्रत्यासत्त्या स्त्री-
प्रत्ययप्रकृतिविशेषणमेवेत्यत आह ( अजादिभिरिति ) लक्ष्यानु-
रोधाद् व्याख्यानाच्चैतत्पञ्चन्तमिति भावः। न च समासप्रत्ययवि-
धाविति तदन्तनिषेधात्को दोष इति वाच्यम्, अनुपसर्जनादिग्रहणेन
स्त्रीप्रत्यये तदप्रवृत्तिज्ञापयिष्यमाणत्वात् (पञ्चाजीति ) पञ्चानामजानां
समाहार इति तद्धितार्थेति समासे द्विगुसंज्ञायामकारान्तोत्तरपदो
द्विगुः स्त्रियामिष्ट इति स्त्रीत्वे द्विगोरिति ङीप्। ( अत्र
समाहारेति ) न च समुदायनिष्ठस्त्रीत्वस्यावयवेनापि बोध-
नात्पष्ठ्यन्ततया व्याख्यानेप्यत्र दोषस्तदवस्थ एवेति वाच्यम्,
तादृशव्याख्यानसामर्थ्यादजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहणात्। प्रकृते
च अजादीतरसमुदायवाच्यत्वेन न दोष इति दिक्। ( शूद्रा चेति )
शूद्रशब्दाट्टापमुत्पादयति जातिश्चेट्टाच्ये इति प्रथमयोगार्थः एवमसह-
त्पूर्वेत्यत्रापि जातिरिति वर्त्तते महत्पूर्वकट्टापन्नोत्पादयति जातिश्चेट्टाच्ये
इति द्वितीयस्यार्थः। अत्र जातेरित्यनुवृत्तिफलन्तु पूर्वं शूद्रशब्दे जाति-
मात्रविवक्षया महच्छब्देन समासे पश्चात्स्त्रीत्वविवक्षायां महती शूद्रे-
त्यर्थे महाशूद्रेति टाबेव भवति समुदायस्य जातिवाचकत्वाभावात्।
( महाशूद्रीति ) आभीरी तु महाशूद्री जातिपुंयोगयोः

समेति कोशबोधिताभीरत्वजातिविशिष्टस्य स्त्रियां वर्तमानत्वेन ततष्टाप् स्यात् । समासप्रत्ययेति निषेधस्तु अस्मादेव ज्ञापका-त्स्त्रीप्रत्यये न प्रवर्तते इति ज्ञापनात्सति तदन्तविधौ जाते-रिति ङीषं बाधित्वा टाप् स्यादिति भावः । ( सामान्यग्रहणमिति ) सूत्रेऽनुबंधोच्चारणाभावेन एकानुबंधेत्यादिपरिभाषाविषयो नेति भावः । ननु संज्ञाशास्त्रे कार्य्यकालपक्षस्य सिद्धान्तितत्वेन न षडिति निषेधकाले ष्णान्तेति षट्संज्ञाया अप्रवृत्तौ कथं निषेध इत्यत आह ( पञ्चेत्यत्रेति नलोपः सुप्स्वरेति ) न चात्र सूत्रे संज्ञाविधावित्यस्य दत्तदंडिनौ दंडिदत्ताविव्येव भाष्ये उदाहृतं, तत्र घिसंज्ञां प्रति नलो-पस्यासिद्धत्वाद् द्वन्द्वे घीति पूर्वनिपाताप्राप्तौ विनिगमनाविरहादु-भयोः पर्य्यायेण पूर्वप्रयोगः । न च द्वन्द्वे घीति पूर्वपदत्वेन लोपे च सति विलम्ब । घित्वे च पूर्वप्रयोग इत्यन्योन्याश्रय इति वाच्यम्, यस्य पूर्वपदत्वे घित्वं भावि तत्पूर्वं प्रयोज्यमिति द्वन्द्वे घीत्यस्यार्थ-करणेनादोषात् । एवं च नलोपासिद्धत्वानापत्तौ कथं षट्संज्ञेति वाच्यम्, प्राचीनमते पदसंज्ञासापेक्षत्वेन नलोपस्य बहिरङ्गतया षट्संज्ञां प्रत्यासिद्धत्वात् । नवीनमते तु कृति तुक्ग्रहणेन संज्ञानिमि-त्तकस्य न बहिरङ्गत्वमिति कथमसिद्धत्वमिति न शक्यम् । असिद्धत्वाभावेऽपि स्त्रियां यत्प्राप्नोति तन्नेति भाष्यसिद्धान्त-सिद्धेर्थे भूतपूर्वपदत्वमादाय निषेध इति दिक् ॥ ( पूर्वस्य किमिति ) एतदभावेऽपि अत्ग्रहणसामर्थ्यात्तपरकरणसामर्थ्यान्न यासयोरिति निषेधसामर्थ्याच्च प्रत्ययस्थककाराव्यवहितपूर्वस्याकार-स्येत्वमित्यर्थविशेषज्ञापनेन सर्विकेत्यादौ न दोष इत्यत आह ( कटु-केति ) अत्र च विशेषार्थाप्रवृत्तौ सामान्यार्थेनेत्वं स्यादित्याशयः । केचित्तु पूर्वोक्तेन ज्ञापकेन विशेषार्थज्ञापनम्, अपरेण ज्ञापकेन मुखना-सिकावचन इति निर्देशेन च पूर्वस्य परस्य च प्राप्तौ पूर्वस्यैवेति नियमे सर्विकेत्यादौ दोषाभाव इति वदन्ति। न च कटुकेत्यादौ असिद्धपरिभाषया पूर्वमेव सवर्णदीर्घेनेत्वप्राप्तिरिति वाच्यम्, वार्णादाङ्गं बलीय इति

परिभाषया पूर्वमेवेत्त्वप्रवृत्तेः। किं च सकललक्ष्यप्राप्तिकदीर्घस्य येन नाप्राप्तिन्यायेन इत्त्वेन बाध इति भाष्ये तु प्रत्ययस्थे कीति न्यासमाहृत्य पूर्वग्रहणं प्रत्याख्यातमिति तत्त्वविद आहुरिति। केचित्तु पूर्वग्रहणाभावेऽव्याप्त्यतिव्याप्तिदोष इत्याशयेन कटुकेत्युक्तमित्याहुः ( आतः किमिति) सांकाशियकेत्यत्र नातिप्रसंगः, अकारस्य स्त्रीप्रत्ययावयवत्वेपि स्त्रीबोधकत्वाभावादिति प्रश्नः। ( साङ्काशियकेति ) संकाशेन निर्वृत्तं नगरं सांकाश्यं संकाशादिभ्यो ण्यः, तस्मिन्भवेति विग्रहे धन्वयोपधादिति वुञ् अत्र लक्ष्यानुरोधात्स्त्रीप्रत्ययावयवस्येत्यर्थ इत्त्वं स्यादिति भावः। न च स्थाने ग्रहणस्य जागरूकतया कथमवयवषष्ठीति वाच्यम्, तस्य भाष्ये प्रत्याख्यानात्। न च विधौ परिभाषोपतिष्ठते नानुवादे साक्षाद्विधेयविशेषणे चरितार्थानां परिभाषाणां तद्विशेषणविशेषणेन प्रवृत्तिरित्यर्थकपरिभाषाज्ञापनार्थन्तदिति वाच्यम् तस्या अपि भाष्येऽदर्शनात् अत एव उदात्तयणो हल्पूर्वादित्यत्र च स्थानार्थलाभः, न च प्रतिपदोक्तपरिभाषया स्त्रियां विहितस्य स्त्रीप्रत्ययस्य ग्रहणादत्र भवार्थविहितस्य न ग्रहणमिति वाच्यम्, विशेष्यरूपेण स्त्रीप्रत्ययस्य सूत्रेऽनुच्चारणेन प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः प्रतिपदोक्तत्वं च यस्मिन्पदे परिभाषा प्रवर्तनीया तत्पदवृत्त्यानुपूर्व्यवच्छिन्नसाक्षाद्विधेयतोद्देश्यतान्यतरविषयताप्रयोजकपदघटितशास्त्रत्वमिति दिक् (स्त्रीप्रत्यये किमिति) यक्पूर्वाया इति स्त्रीलिंगनिर्देशः किमर्थं इति प्रश्नः। ( न तु द्वैपयोरसंभवादिति ) सूत्रे एषा द्वेति त्यदाद्यत्वादिकरणात्संज्ञोपसर्जनयोरप्रवृत्तिसूचनात् अत्र पूर्वमेवाकाचि आतः स्थानित्वासंभवः। ( सपूर्वयोर्नेत्त्वमिति ) न एतत् सु इति स्थिते पूर्वमकाचि कृतेऽकृते वा नञ्समासे अन्तरंगानपीति न्यायेन त्यदाद्यत्वात्पूर्वं सुलोपे पुनर्विशिष्टात्सुपि अत्वे टापि समासात्पूर्वोत्पन्नसुपः पर एव टाबिति भावः, अज्ञाताऽनेषकेति विग्रहः ( अव्यभिचारादिति) स्वार्थद्रव्यलिंगसंख्याकारकप्रयुक्तकार्यैः संस्कृतस्य तद्धितार्थेन योगात्सर्वत्रातःस्थानिकत्वमक्षतमेव एवं च संभवव्यभिचाराभ्यां स्याद्विशेषणम-

र्थकत् इति युक्त्या नान्येषां विशेषणं किन्तु स्वशब्दस्यैव, अत्र च संज्ञोपसर्जनेऽकचो प्राप्तौ अन्यत्राकचः प्राप्तौ टाप् तदभावयोरात्स्थानिकत्वस्य इत्वादर्थे लाभः एतदेव मूले स्फुटीकृतम्। (न स्त्रीत्वमिति) "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो स्त्रियां धने" इति कोशादिति भावः। विहितविशेषणस्य फलमाह ( बहुव्रीहेरिति ) न तु खट्वा सु इत्यस्य बहुव्रीहौ शेषाद्विभाषेति कपो वैकल्पिकत्वेन तदभावे गोस्त्रियोरिति ह्रस्वे ततष्टापि अखट्वा इति ततोऽज्ञातावखट्वेति विग्रहे केणा इति ह्रस्वे पुनष्टापि प्रत्ययस्थेति नित्यमेवेत्त्वम्। परविशेषणे तु अभाषितपुंस्कात्खट्वशब्दात्परत्वेन विकल्पेनेत्त्वं स्यात्। शेषाद् विभाषेति कपि तु न कपीति निषेधे आपोन्यतरस्यामिति वैकल्पिकह्रस्वेऽनेनेत्त्वविकल्पः,गोस्त्रियोरिति ह्रस्वत्वं तु न स्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकत्वाभावात्। कपः समासान्तत्वेन तदवयवत्वादिति संक्षेपः (अयमेवेति) अयमपीत्यर्थः। शंखः पांडुरेवेतिवत्प्रयोगः। न च यातीति यः क्विप् कुरुचरस्य यः कुरुचरयः स इवाचरतीति आचारक्विबन्तात्कर्त्तरि क्विपि कुरुचरेत्यत्रानुपसर्जनाधिकारस्य चारितार्थ्यमिति वाच्यम, तदन्तविधिज्ञापकतापरभाष्यप्रामाण्येन स्त्रियामाचारक्विबन्तात्कर्त्तरि क्विपोऽनभिधानात्। न च पंच स्त्रीगोव्यक्तयो धनं यस्येति पंचगवधन इत्यत्र पंचगवेत्यस्योपसर्जनत्वात्तत्रास्य चारितार्थ्यमिति वाच्यम, एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वस्य पंचगवेऽसत्वात्।प्राचीनमतेपि शक्तिविशिष्टत्वमर्थवत्त्वम् वै स्वपर्य्याप्तत्वस्वप्रयोज्यबोधजनकत्वप्रकारकवक्तृतात्पर्य्यीयविशेष्यतापर्य्याप्त्यधिकरणत्वोभयसंबंधेन एतस्य च समुदायवृत्तित्वात् तदन्तविधिफलन्तु कौम्भकारेयसिद्धिः,अन्यथा कुंभकार्य्या अपत्यमिति विग्रहेपि केवलकारीशब्दादपि स्त्रीप्रत्ययान्तत्वेन स्त्रीभ्यो ढगिति ढगापत्तौ कुंभकारेयोप्यापद्येत न चैकार्थीभावस्य समुदायवृत्तित्वात्कथमेकदेशात्तद्धितोत्पत्तिरिति वाच्यम्, तद्धितार्थोत्तरपदेति सूत्रे उत्तरपदग्रहणेन अपर्य्याप्त्योप्येकार्थीभावमादाय वृत्तिरिति

ज्ञापनादिति दिक् ॥ ( उपसर्जनत्वान्नेहेति ) न च समासप्रत्ययेति निषेधात् तदन्तविध्यभावे टिद्रूपं यत्प्रातिपदिकमित्यर्थे दोषाभावः न च कुरुचरीत्यत्रापि टिद्रूपप्रातिपदिकत्वाभावान्ङीप् न स्यादिति वाच्यम् अवयवेऽचरितार्था अनुबन्धाः समुदायस्योपकारका भवन्तीति न्यायेन कुरुचरशब्दस्य टित्वात्। न चोक्तरीत्या बहुकुरुचरशब्दस्यापि टिद्रूपत्वमिति वाच्यम्, यं समुदायं यो न व्यभिचरति स तस्योपकारको भवतीति स्वीकारेणादोषादिति वाच्यम्, स्त्रीप्रत्यये तन्निषेधाप्रवृत्तेर्ज्ञापितत्वाद् । न च तदन्तविधावपि समुदायस्यानुपसर्जनत्वमव्याहतमेवेति वाच्यम्, तदेव पुनर्व्यर्थीभूय गृह्यमाणविशेषणताज्ञापनात् । न चैवमपि स्त्रियामित्यस्यापि गृह्यमाणविशेषणत्वान्न दोष इति वाच्यम्, तद्ग्रहणसामर्थ्यादेव स्त्रियामित्यस्य तदन्तविशेषणत्वादिति दिक् वचेर्लृट् शानचि स्यतासीति स्ये कुत्वषत्वे, आने मुगिति मुकि च टापि ( वक्ष्यमाणेति ) अत्र स्थानिवत्त्वेन टित्वोगित्त्वमादाय टिड्ढाणञिति उगितश्चेति ङीप्प्रसक्तिः कुतो नेति अनल्विधाविति निषेधस्तु न संभवति न ल्यपीति लिङ्गेन इत्पदघटितालमात्रवृत्तिधर्म्मघटितधर्म्मावच्छिन्नोद्देश्यताके कार्य्ये तदप्रवृत्तिज्ञापनात् अन्यथा, प्रदायेत्यादौ क्त्वावृत्तिकित्त्वानयनेनानल्विधाविति निषेधेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाशंक्य समाधत्ते ( यासुट् इत्यादिना ) अत्र लिङो ङित्त्वस्य स्थानिवत्त्वेन तदादेशे सुलभतया यदागमपरिभाषया आगमविशिष्टेप्यतिदेशाद्यासुटि ङित्त्वस्य लकारवृत्तीत्पदघटितालमात्रवृत्तिधर्म्मातिदेशोऽनल्विधाविति निषेधः प्रवर्तत इति ज्ञापकत्वात्प्रकृते च टित्वोगित्त्वयोरतिदेशो निषेधः सुलभ इति बोध्यम् । ननु सार्वधातुकमपिदिति सूत्रेऽपिदिति योगं विभज्य गाङ्कुटेत्यतो ङिद्ग्रहणमनुवर्त्य उभयोरावृत्तिं कृत्वा अपिदिति प्रसज्यप्रतिषेधं चाश्रित्य ङित्पिन्न भवति पिच्च ङिन्न भवति इति भाष्ये उक्तम् । अत एव ब्रूयादित्यादौ ब्रुव ईडितीण् न । एवं च स्त्रूयादित्यादौ गुणनिषेधाय ङित्त्वस्य चारितार्थ्येन ज्ञापकत्वासंभव

इति प्रकृते का गतिरित्यत आह । ( शानचः शित्त्वेनेति ) अन्यथा श्नावृत्तिशित्त्वमादाय मुपाणोत्यादौ गुणाभावसिद्धे तद्वैयर्थ्यं स्पष्टमेवेति । यदि च शानचः शित्त्वमपि भाष्ये प्रत्याख्यातमित्युच्यते, तदा सत्यभिधानेऽजादित्वाट्टाविति दिक् । ननु चुरा शीलमस्या इति विग्रहे शीलं छत्रादिभ्य इति णे अणन्तत्वाभावाच्चौरीति कथं ङीबन्तप्रयोग इत्यत आह ( ताच्छीलिकेति ) अयं भावः अणि परे अनः प्रकृतिभावबाधनार्थं कार्म्मस्ताच्छील्य इति निपातनमणि सति यत्कार्यं तत्ताच्छीलिके णेपि भवतीति ज्ञापनार्थम् । अन्यथा अणपरत्वाभावादेव प्रकृतिभावविधायकस्य अन् इति सूत्रस्याप्राप्तौ नस्तद्धित इति टिलोपेनैव कार्म्म इति सिद्धे निपातनानर्थक्यं स्पष्टमेवेति । अत्र ताच्छीलिक इत्यनुक्तौ तदस्यां प्रहरणमिति णे दांडेत्यादावपि ङीप्प्रसक्तंस्यात्, णे इत्यनुक्तौ पुष्पाण्याहरति तच्छीला पुष्पाहरेति अच्प्रत्ययान्तेपि स्यात् । यञश्चेत्यत्र अपत्यग्रहणं कर्त्तव्यम् किम्प्रयोजनम् द्वैप्या इति न कर्त्तव्यम् चरपोऽयञश्चेति पाठात्त्रायञिति छेद इत्युक्तं भाष्ये, तत्र फलाभेदाय सामान्यतो वार्त्तिके अपत्यग्रहणमपत्याधिकारस्थपरम् अन्यथा वार्त्तिकसत्वे देवस्यापत्यमिति विग्रहे दैवीति प्रत्याख्यानेऽयञन्तत्वाभावाद्दैव्येति फलभेदः स्पष्ट एवेत्यर्थतो व्याचष्टे ( अनपत्याधिकार इति ) अयञिति छेदे अयाञिति पृथक् पदम् तेन गार्गीति सिद्धः । अन्यथा गार्गयीति स्यात्, ननु प्राचां ष्फस्तद्धित इति सूत्रे षित्त्वसामर्थ्यादेव प्रातिपदिकत्वाभावेपि ङीप्सिद्धे तद्धितग्रहणं व्यर्थमिति चेत्सत्यम्, इदमेव तद्धितग्रहणं ज्ञापयति क्वचिदन्यतोपि भवतीति तेनासुरेरुपसंख्यानमिति नापूर्वम् । ( मामकीति ) अस्मदूशब्दादणि तवकममकावेकवचन इति ममकादेशे आद्यचो वृद्धौ मामकीति । न त्वणन्तत्वाट्टिड्ढेति ङीप्सिद्धे केवलमामकेति सूत्रे मामकग्रहणं व्यर्थमत आह ( नियमार्थमिति ) अणन्तान्मामकशब्दाद्यदि ङीप् स्यात्तर्हि संज्ञाछन्दसोरेवेति । न च मामकनरकयोरिति वार्त्तिके मामकग्रहणं व्यर्थं स्यादिति वाच्यम्, मां मातीति मामः

मामं कायतीति मामिकेत्यत्र चारितार्थ्यात् । न चात्रापि केवलमाम-केत्यस्य प्राप्तिरिति वाच्यम्, भागधेयसाहचर्य्यात्तद्धितान्तस्यैव ग्रहणात् । न पत्युर्विशेषणमिति दृढपत्नीत्यादिलक्ष्यानुरोधादिति भावः । ( व्यस्ते कथमितीति ) विभाषा सपूर्वेति सूत्रे सहशब्दो विद्यमानावयववाची तेन विद्यमानावयवपूर्वस्य पतिशब्दान्तप्रातिपदिकस्येत्यर्थं समासे एवास्यप्रवृत्तौ वाक्ये कथमि-त्याशयः । एवं न स्त्रीशूद्रौ वेदमधीयातामिति श्रुतिचोदनाद्यज्ञसंयोगा-भावेन पत्युर्नो यज्ञसंयोगे इत्यस्याप्यप्रवृत्तेः । ( उपचारादिति ) यज्ञ-फलैश्वर्य्यवत्त्वस्यारोपादित्यर्थ इति केचित् । वृषलस्त्रियां बहुधर्म्मा-चरणादर्शनादियं वृषलस्य पत्नी वसिष्ठस्य पत्नीवेति लोकप्रवाद इति केचित् । वस्तुतस्तु पत्नीवाचरतीति पत्नी इत्येव युक्तमित्याशयेनाह (यद्वेति सपूर्वस्य किमिति) सहशब्दो विद्यमानावयववाची किमर्थ इति प्रश्नः । कुसिदशब्द इति अत्र सूत्रे भाष्ये वृत्तौ च उदात्तग्रहणं वृषा-कप्यर्थम्,अन्यथा लवावन्ते द्वयोश्च बह्वषो गुरुरिति मध्योदात्तापत्ते-रित्युक्तम् । कुसिदशब्दस्य दीर्घमध्यत्वे कुसिदार्थ चेत्यपि वदेदिति भावः । ( ज्येष्ठया शल्येति . ) अत्र सूत्रे लक्ष्यानुरोधाच्छ्रुतानु-मितयोरिति न्यायं बाधित्वा अनुपसर्जनादित्यस्य तदन्तविशेषणत्वमेव अत एव ज्येष्ठया शल्येति गृह्यसूत्रे वृत्तिकृता नारायणेन बहुव्रीहिं कृत्वाऽनेन ङीब्नत्वमित्युक्तम् । वस्तुतस्तु अनुपसर्जनादित्यस्य सर्वत्र गृह्यमाणविशेषणत्वेन क्लृप्ततयाऽत्रापि तथैवोचितम् । अत एव उप-मानानीति सूत्रे कुंभकपाललोहिनीत्यत्र लोहितशब्दस्योपसर्जनत्वे नानुपसर्ज्जननिमित्तक ईकारो न प्राप्नोतीत्याशंकितम् । एवं च त्रिषु स्थानेषु पत्नी ज्येष्ठेति बोध्यम् । ( गौरादिषु मातामहीशब्दस्येति ) केचित्तु गौरादिगणे तत्पाठे मानाभावाद्दंष्ट्रेति अजादित्वाट्टावित्याहुः ( अमत्रे हि स्त्रीविषयत्वादिति ) कमंडलुरूपे इत्यर्थः । "कुंडीकमंडलू जारात्पतिवत्नीसुते पुमानिति" मेदिनीकोशेन कमंडलुवाच्ये कुंडशब्दः स्त्रीलिङ्ग इति भावः । यदि तु "पिटरे तु न ना कुंडामिति" विश्वकोशे

नपुंसकत्वमप्युक्तम्, पिठरामत्रशब्दौ पर्य्यायौ पिठरं स्थाल्युखाकुंड-मित्यमरे नपुंसकत्वमात्रोक्तिरेकदेशानुवादिकेत्युच्यते तदावेकविधमं-स्थानेषु अमत्रेषु कुंडव्यवहारेण कुंडत्वे जातित्वाभावादप्राप्तो ङीषिति बोध्यम् । स्त्रीविषयत्वादित्यस्य जातित्वाभावादित्यर्थः कमंडलुसंस्था-नस्यानेकत्वात्तद्रूपामत्रवाचिनो जातित्वमप्यस्ति सूत्रं तु नियमार्थमेव तेन अमृते जारजायां कुंडेत्येवेति शेखर उक्तम् । ननु नागशब्दस्य जाति-वाचकत्वाज्जातेरिति ङीष्प्रसिद्धे किमर्थन्तद्ग्रहणमित्यत आह ( गज-वाचीति ) कस्यांचित्स्त्रियां स्थौल्यगुणयोगदर्शनेन इयं स्त्री नागीति प्रयुक्त एकव्यक्तिमात्रवृत्तित्वेन जातित्वाभावान्ङीषोऽप्राप्तौ विध्यर्थं सूत्रे तद्ग्रहणमिति भावः । न चात्र गौणत्वान्न भविष्यतीति वाच्यम् तस्याः पदकार्यविषयत्वाद् विधित्वानुरोधाच्च प्रवृत्तौ बाधकाभावात् ननु सूत्रे स्थौल्यग्रहणं किमर्थमत आह ( सर्पवाचीति ) कस्यांचि-त्स्त्रियां दैर्घ्यगुणयोगदर्शनेनेयं स्त्री नागा सर्पिणी इति प्रयुक्ते ङीष्वारणाय तद्ग्रहणमिति भावः । ( वोतो गुणवचनादिति ) अत्र गुणवचनशब्देन समस्तकृदन्ततद्धितान्तसर्वनामजातिसंख्याशब्दाति-रिक्तशब्दा गृह्यंते । तत्र गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनगुणि-वाचकानामेवोक्तशब्दानां ग्रहणादतो रूपादीनां न ग्रहणमिति दिक् । (उतःकिमिति)एतदभावेपि खरुसंय्योगोपधान्नेत्येतत्सामर्थ्येनात इत्य-स्यासंबंध इति प्रश्नः । शुचिरिति शुचेरौणादिकः किदिन् उणादी-नामव्युत्पन्नत्वेन कृदिकारादित्यस्याप्राप्तिरिति तदाशयः । वस्तुतस्तु कृदिकारादिलीष्मेवेति तथासति शुक्लेत्येव प्रत्युदाहरणम् खरुसंय्यो-गोपधेति निषेधस्तु नात्र खरुसाहचर्य्यादुकारान्तस्यैव संय्योगोपधस्य ग्रहणात् साहचर्य्यपरिभाषाऽनित्यत्वे तु पीतेति प्रत्युदाहरणं बोध्यम् । (अक्तिन्नर्थात्किमिति ) समुदायद्वारा अवयवे प्रश्नः अर्थादर्थग्रहणं किमर्थमिति प्रश्नः । अजननीरित्यत्र तु न दोषः, अक्तिन्ग्रहणात् । न च भूतिः कृतिरित्यत्रापि स्यादिति वाच्यम्, बह्वादिगणे पद्धतिशब्द पाठेन क्तिन्नन्ताद्यदि स्यात्तर्हि पद्धतिशब्दादेवेति नियमात् । एवं

९१ व्यर्थं सत् इकारान्ताद्यदि ङीप् स्यात्तर्हि क्तिन्नन्तभिन्ना। अत एव गणे पाठस्य चारितार्थ्यम्। अजननिरित्यत्र क्तिन्नन्तभिन्नत्वेन ङीष् स्यादतस्तदुपात्तमित्याशयः।(कथं ब्रह्माणीति)आनुकि दीर्घोच्चारणसामर्थ्यात्क्वचिदन्यतोऽपि भवतीति कल्पनात्तेन ब्रह्माणीति सिद्धमिति न युक्तिसहम्, आनुकि कृते सति पररूपापत्तेः। न चाकारोच्चारणसामर्थ्यान्नेति वाच्यम्, अल्लोपोऽन इति लोपाभावाय तच्चारितार्थ्यात्। न च लक्षणप्रतिपदोक्तपरिभाषयाऽस्यानोऽग्रहणमिति वाच्यम्, बहुव्रीहेरूधसोऽनङ्ङिति सूत्रे अनङ्यकारोच्चारणं शार्ङ्गधन्वेत्येतदर्थमिति भाष्येण अल्लोपोऽन इति विषये लक्षणप्रतिपदोक्त इत्यादिपरिभाषाणामप्रवृत्तिकल्पनात्। न च नकारमात्राऽऽगमेनैव सिद्धे आगमविधानसामर्थ्याल्लोपो नेति वाच्यम्, न संयोगाद्वमन्तादिति निषेधेन सर्वणीत्यत्रागमविधानस्य चारितार्थ्यात्। एवं च पररूपबाधनासंभवाद्दीर्घोच्चारणस्यावश्यकत्वेन ब्रह्माणीत्येतदर्थं मूलोक्तकल्पना युक्तेति दिक्। ( क्वचिन्न धनक्रीतेति ) कर्तृकरणे कृता बहुलमिति बहुलग्रहणेन गतिकारकोपपदानामित्यस्य। नित्यत्वज्ञापनात्क्वचित्सुबुत्पत्त्यनन्तरमपि समासलाभे एवं चान्तरङ्गत्वात्समासात्प्रागेव टापि ततः समासे अदन्तत्वाभावान्न ङीषिति भावः। न च बहुलग्रहणं सर्वोपाधिव्यभिचारार्थत्वेन दात्रेण लूनवानित्यत्र नेति समासे वक्ष्यमाणतया ज्ञापकत्वासंभव इति वाच्यम् अम्बाम्बेति सूत्रे गवादिग्रहणस्यैव तस्या अनित्यत्वे प्रमाणत्वसंभवात्। तद्धि गविष्ठ इत्यादौ सात्पदाद्योरिति निषेधे षत्वार्थं कृतं उक्तपरिभाषाया नित्यत्वे पदादित्वाभावादेवाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेति। न च हृदिस्थ इत्यादौ षत्वाभावाय गवादिग्रहणस्य नियमार्थकत्वमावश्यकन्तथा च ज्ञापकत्वासंभव एवेति कथं धनक्रीतेति वाच्यम्, सत्यभिधानेऽजादित्वाट्टाबित्यदोषात्। केचित्तु क्रीतात्करणादित्येव सिद्धे पूर्वग्रहणेनोक्तपरिभाषाऽनित्यत्वज्ञापनादित्याहुः, तन्न, पूर्वग्रहणस्य प्रातिपदिकविशेषणलाभार्थत्वात्। अत एव

धनेन क्रीता वस्त्रेण क्रीतेति वाक्ये नेति दिक्॥(उपसर्जनात्किमिति)ननु कल्याणपाणिपादेत्यत्र ङीप्वारणायात्र सूत्रेऽस्वांगपूर्वपदादित्यनुवर्त्य पर्युदासं चाश्रित्य स्वांगभिन्नपूर्वपदात्स्वांगादित्याद्यर्थं कृतं एवं च शिखेत्यत्र पूर्वपदत्वाभावान्न दोष इत्यत आह (शोभना शिखा सुशिखेति ) अत्र केचित् उपसर्जनादित्यस्याभावेऽनुपसर्जनाधिकारात्सूत्रमेव व्यर्थमिति वदन्ति तन्न बहुव्रीहेश्चान्तोदात्तादिति सूत्रे बहुव्रीहिग्रहणसामर्थ्यात्तदननुवृत्तेः। भट्टास्तु शिखेत्येव प्रत्युदाहरणम् शोभनेत्यादिसुशिखान्तं प्रक्षिप्तपाठः भाष्ये अशिखेति प्रत्युदाहरणमपि एकदेशतात्पर्यपरम् विशिष्टे सहनञिति निषेधात्। अस्वांगपूर्वपदेत्यत्र प्रसज्यप्रतिषेध एवेत्याहुः। अत्र केचित् उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते इति परिभाषया सुशिखेत्यत्र पूर्वं टापोऽप्राप्तौ प्रत्युदाहरणं सम्यगेवेति तच्चिन्त्यम् । यत्रोत्सर्गशास्त्रप्रवृत्तिमात्रेणैवापवादशास्त्राप्रवृत्तिस्तत्रैवास्याः प्रवृत्तिस्वीकारात् । यथा दधतीत्यादौ अत्र तु न तथा टापः प्रवृत्तौ दीर्घे च ङीपोऽप्रवृत्तिरिति दिक् ॥ ननु स्वमङ्गं स्वाङ्गं चेत्सुमुखा शालेत्यत्रापि स्यात् मुखस्य शालाङ्गत्वात्, सुकेशी रथ्येत्यत्र च न स्यात्, केशानामनंगत्वात् इत्यत आह ( स्वाङ्गं त्रिधेति ) तेन चेत्तत्तथायुतमिति तेन तज्जातीयेन वस्तुना प्राणी यथा संबद्धस्तथाऽप्राणिनोपि सम्बन्धश्चेत्तदपि स्वाङ्गमित्यर्थः । ननु स्वाङ्गादित्येव सिद्धे नासिकोदरग्रहणं व्यर्थमत आह (आद्ययोरिति) अयं भावः पुरस्तादपवादन्यायेन नासिकोदरग्रहणं बह्वच्कलक्षणनिषेधस्यैव बाधको न तु सहनाञित्यस्य पूर्वबाधेन चारितार्थ्ये पश्चादुपस्थितस्य बाधे मानाभावादिति। ननु ओष्ठाद्यंशे ङीपनिषेधत्वावच्छिन्नबाधकत्वे सहनञित्यस्यापि बाध इत्यत आह (मध्येऽपवादेति) तेनानेन न्यायेनासंयोगोपधादिति ङीप्निषेधस्यैव बाधकत्वन्न तु सहनाञित्यस्येति भावः। (अच्छन्दोर्थं वचनमिति ( कद्रुकमण्डल्वोश्छन्दसीत्यत्र छन्दसीत्यकरणे लोके संज्ञातोऽन्यत्रापि स्यात्, कद्रुकमण्डल्वोः संज्ञायामिति करणे

कन्यासि संज्ञातिरिक्ते न स्यात्, अतोऽच्छन्दोर्थं वचनमिति दिक् ॥

इति कारिकामर्म्मविवृतौ स्त्रीप्रत्ययाः ॥ * ॥ * ॥

ननु त्रिकं पंचकं वा प्रातिपदिकार्थ इति पक्षे कृष्णादिशब्दे लिंगस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणं व्यर्थमत आह ( नियतोपस्थितिक इति ) यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इति, एवं च तटाद्यनियतलिङ्गके लिङ्गस्य नियतोपस्थितिकत्वाभावेन लिङ्गग्रहणमावश्यकमिति नियमेनेत्यस्य व्यापकेनेत्यर्थः, व्यापकत्वं च तत्समानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्म्मवत्त्वम्, अधिकरणतानियामकसम्बन्धश्च स्वविषयकश्रावणप्रत्यक्षसमवायित्वस्वविषयकशक्तिज्ञानसमवायित्वरूपः, न च नीलरूपतत्परकस्य कृष्णशब्दस्यानियतलिंगत्वात्कथं प्रथमेति वाच्यम्, वासुदेवेऽर्थे नियतपुंल्लिङ्ग एवेत्यदोषात् । कृष्णादिशब्दे कृष्णत्वकृष्णासमवायपुंस्त्वादिर्नियतोपस्थितिकत्वं बोध्यम् । ननु प्रातिपदिकार्थमात्रे प्रथमासिद्धौ किमर्थं परिमाणग्रहणमिति चेन्न, मूलोक्तार्थलाभार्थं तस्यावश्यकत्वात् अन्यथा नामार्थद्वयोरभेदातिरिक्तः संबन्धोऽव्युत्पन्न इति व्युत्पत्तिभंगापत्तेः । द्रोणाभिन्नव्रीहिरिति बाधितमेव न चोक्तव्युत्पत्तौ प्रमाणाभाव इति वाच्यम्, भेदसंसर्गकनामार्थप्रकारकशाब्दबोधं प्रति प्रत्ययजन्यविशेष्यतासंबन्धेनोपस्थितिः कारणमिति कार्यकारणभावस्यैव प्रमाणत्वात् । अत एव राजपुरुष इत्यादौ राजनिरूपितस्वत्ववान्पुरुष इति बोधः न, किन्तु राजाऽभिन्नपुरुष इत्येव । राज्ञः पुरुष इत्यत्र ङस्प्रत्ययजन्यस्वत्वोपस्थितेः सत्त्वात्तथा बोधसिद्धिरिति दिक् ॥ ( वचनं संख्येति ) प्रातिपदिकार्थेन तु न सिद्धिः, उक्तार्थानामप्रयोग इति निषेधात् । अनन्वितार्थकविभक्तिकल्पनापेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वादिति मान्या विभक्तिरिति भावः । यदि तु अपदं न प्रयुंजीतेति भाष्यासिद्धान्तादनुवादकैकवचनादेः सिद्धिरित्युच्यते, तदा वचनग्रहणप्रयोजनं मृग्यमिति बहवः । नासूया तत्र कर्त्तव्या यत्रानुगमः

क्रियत इति भाष्यसिद्धान्तादू व्याख्यानात्करणं वरमिति प्राचीन-सिद्धान्ताच्च कर्त्तव्यमेवेति केचित् । ( कारक इति ) कारकत्वं च क्रियान्वयित्वमिति स्वीकारे ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र पुत्रद्वारा ब्राह्मणस्यापि क्रियान्वयित्वेन कारकत्वापत्तिः,साक्षात्क्रिया-न्वयित्वमिति स्वीकारेऽपि मातुः स्मरतीत्यत्रापि कारकत्वं स्यादतः क्रियाजनकत्वेनान्वयित्वमिति मातुः क्रियाजनकत्वेनान्वयित्वाविवक्ष-णान्न दोषः । असन्निहितसंप्रदानस्यापि दातृबुद्धिस्थत्वात्कर्म करोतीतिवत्प्रयागस्थाय ब्राह्मणाय गां ददातीत्यादौ ब्राह्मणादेः क्रियाजनकत्वसिद्धिरिति दिक् । ( कर्तुः किमिति ) करोति कर्तृकर्मा-दिव्यपदेशानिति भाष्यात्कारकशब्दस्य क्रियापरत्वं ईप्सितमित्यस्या-प्तुमिष्यमाणमित्यर्थकत्वमेवं च केनाप्तुमिष्यमाणमित्याकांक्षायां कारकाधिकारात्क्रिययेत्यर्थलाभे कर्तृग्रहणं किमर्थमिति प्रष्टुराकूतम्, अथवा कर्त्तारं विना असम्भवन्ती क्रिया कर्त्तारमपेक्षिष्यते(माषेष्विति) माषाभुक्षया तेषु प्रसक्तमश्वं माषनाशो मा भूदित्यतोऽन्यत्र बध्नातीति तात्पर्यार्थः । अत्र फलनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वसंबंधेन माषाणामपि क्रियया इष्यमाणत्वादिति प्राचीनमतम् । नवीनास्तु कर्तृग्रहणसामर्थ्यात्प्रकृतधातूपात्तव्यापाराश्रयस्य ग्रहणम्, कर्तृग्रह-णाभावे कर्तुर्लाभेपि कर्तृवृत्तिव्यापारवाचकधातुवाच्यम् । अथ च व्यापारप्रयोज्यं यत्फलं तादृशफलवत्त्वप्रकारिकेच्छानिरूपितविषय-ताश्रयस्य कर्मसंज्ञाविधाने माषभक्षणकर्तुरश्वस्य मद्वृत्तिव्यापार-प्रयोज्यगलबिलाधःसंयोगाश्रया माषा भवन्त्वितीच्छया माषाणां अधिकरणसंज्ञां परत्वाद् बाधित्वा कर्मत्वापत्तेः । एवं क्रियावाचक-धातुवाच्येत्याद्यर्थेपि दोषो,बोध्य । न च पुष्टयर्थं माषक्षेत्रे अश्वबंधन-स्थले कर्तृग्रहणसत्वेपि देवदत्तस्यैव तादृशकर्तुः मद्वृत्तिव्यापारप्रयो-ज्यबंधनाश्रयोऽश्वो भवतु अश्वस्य गलबिलाधःसंयोगाश्रया माषा भव-न्त्वितीच्छायाः सत्त्वेन माषाणां कथं कर्मत्वं नेति वाच्यम्, प्रकृतधातु-वाच्यफलस्यैव ग्रहणेनादोषात् । अत्र च मानं प्रत्यासत्तिरेव, केचित्तु

स्वारसिकार्थके मादेष्वश्वं बध्नातीत्यत्र दोषसंभवात्किमर्थं माषेषु
बसक्तमित्याद्यर्थे लक्षणेत्याहुस्तन्न कर्मणा ईप्सिता माषा नतु कर्तु-
रिति ग्रंथसंलापनार्थं लक्षणाया आवश्यकत्वात्। यदि तु प्रकृतधातूपा-
त्तफलस्यैव ग्रहणमित्युच्यते तदा कर्तृग्रहणफलं चिन्त्यम्। अत एव
भाष्ये कर्तृग्रहणशंकासमाधानाकरणमिति दिक्।(तमप्ग्रहणं किमिति)
अवयवद्वारा समुदाये प्रश्नः।कर्तुरुद्देश्यं कर्मेत्येवास्त्विति भावः।(पय-
सौदनमिति ) यदा कृतभोजनोऽपि पयोलाभेन पुनरोदनभोजने प्रवर्त्तते
तदेदं प्रत्युदाहरणं भोजनक्रियायाः पयउद्देश्यकत्वात्. तदुक्तौ तु प्रकृ-
तधात्वर्थफलाश्रयाभावान्न दोष इति। यदि च ईप्सित इत्युक्त्यैव
प्रकृतदोषवारणासंभव इत्युच्यते तदा अग्नेर्माणवकं वारयतीत्यत्राग्नेरपि
संयोगानुकूलव्यापाराभावानुकूलव्यापारार्थकवारिधातुवाच्यउत्तरदेश-
संयोगाश्रयत्वेन कर्म्मत्वापत्तेः। न च वारणार्थानामीप्सित इत्यस्य
वैयर्थ्यमिति वाच्यम्, तथा सति माणवकादपि पंचमी स्यात्।
समप्ग्रहणेन तु प्रयोज्यत्वलाभात्। प्रयोज्यत्वं च प्रकृतधात्वर्थप्रधानी-
भूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्, तच्च नाग्नेः
किन्तु माणवकस्यैव। अयं च कर्तृवृत्तिव्यापारवाचकधातुवाच्यफलाश्र-
यस्य कर्म्मत्वमित्यर्थे दोषो बोध्यः। यदि च तादृशफलाश्रयत्वेनेच्छी-
यविषयताश्रयस्य कर्म्मत्वमित्यर्थ उच्यते तदा दुष्टभृत्यादिकर्तृकाग्ने-
र्माणवकवारणे दोषो बोध्यः। न तु शुद्धकर्तृके तत्र तस्य मदूवृत्ति-
व्यापारप्रयोज्यसंयोगाश्रयोऽग्निर्भवत्वितीच्छा नास्तीति दिक्। ( गेहं
प्रविशतीत्यत्रैव स्यादिति ) कर्म्मणि हन इति सूत्रन्तु पितृव्यमारुह्य
हतवानित्यर्थके पितृव्याघातीत्यत्र चारितार्थ्यात्। सन्विधायक-
सूत्रन्तु आत्मानं बुभुत्सतीत्यत्र चरितार्थम्, अत्रात्मनि विषयतासंबंधेन
बोधस्य सत्त्वादिति मैथिलानां समयः। ननूक्तार्थानामिति न्यायेनैव
सिद्धे अनभिहिताधिकारो वृथेति चेन्मैवम्,संख्यावाक्येन सहैकवाक्य-
तायां कर्मगतैकत्वे द्वितीयाया एकवचनमित्यर्थे संख्यायाः प्राधान्या-
दुक्तार्थानामिति न्यायाप्रवृत्तौ तस्यावश्यकत्वात्। यदि च एकत्व-

विशिष्टे कर्मणि द्वितीयाया एकवचनमित्यर्थे कर्मार्थस्य प्राधान्ये तदा अनभिहिताधिकारो वृथेति भाष्ये स्पष्टम् ( क्वाचिन्निपातेनेति ) अत एव "क्रमादमुं नारद इत्यबोधि सः" इत्यत्र इतिना कर्मण उक्तत्वान्नारदशब्दाद् द्वितीया न। अत एवाधिहरीत्यत्र वचनसामर्थ्यात्सप्तमीति प्राचीनाः। वस्तुतस्तु अत्र तु मुनिसिद्धये क्रियान्तराध्याहार आवश्यकः। तथा च विषवृक्षोपि संवर्द्ध्य स्वयं छेत्तुमिष्यते असाम्प्रतमित्यर्थे तिङा कर्मण उक्तत्वान्न द्वितीया, क्रमादित्यादौ तु अयन्नारद इति श्रीकृष्णीयज्ञानाकारानुकरणात्प्रथमान्तस्य प्रातिपदिकत्वाभावान्न द्वितीया। पश्य मृगो धावतीत्यत्र यथा निपातेत्यादिसमाधानन्तु न युक्तिसहम्, फलाभावात्। किंच निपातेनोक्तत्वेपि प्रातिपदिकस्य उद्भूतकर्मत्वादिकारकशक्तिमत्त्वेन तद्द्योधकविभक्तिश्रवणं दुरुपपादम्। एवं च वचनसामर्थ्यादिक्लेशोपि नेति दिक्। ननु नटस्य गाथां शृणोतीत्यत्र नटस्य गानद्वारा क्रियाजनकत्वेन कारकत्वमस्तु तथा अपादानत्वन्तु न आख्यातोपयोग इत्यत्रोपयोगग्रहणादतः परिगणनमाह ( दुह्याजित्यादि ) अकथितं कर्मेति सूत्रेऽकथितशब्देन सर्वथाऽपादानत्वासम्भवस्य संभवे वा तत्त्वेनाविवक्षितस्य च ग्रहणम्। ( गां दोग्धीति ) अन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वम्, यद्यपि गौः पयस्त्यजति तेन गवा पयस्त्याजयतीत्यर्थे पूर्वेणाव सिद्धन्तथापि पूर्वोक्तार्थे कर्मत्वविधानार्थं सूत्रोदाहरणत्वासिद्धिरिति दिक्। ( बलिं याचते इति ) याचेः स्वीकारानुकूलव्यापारोर्थः। अथवा परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापारोर्थः। नात्र बलेरपादानत्वप्रसक्तिः। न हि याचनादेवापायो भवति। किन्तु याचितोऽसौ यदा ददाति तदा अपायेन युज्यत इति भाष्ये स्पष्टम् ( अविनीतं विनयमिति ) याचेः स्वीकारानुकूलव्यापारोर्थः ( तण्डुलानिति ) विक्लित्त्यनुकूलव्यापारः पचेरर्थः। ( गर्गानिति ) बलात्कारपूर्वकपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापारो दण्डयतेरर्थः। (व्रजमिति) देशान्तरनिवृत्तिपूर्व-

कर्त्तत्किंचिदधिकरणकचिरस्थित्यनुकूलव्यापारोऽवरुधेरर्थः । (माण-वकमिति) जिज्ञासाविषयार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलाष-रूपो व्यापारः पृच्छेरर्थः (वृक्षमिति) हस्तग्रहणपूर्वकयत्किंचिदधिकरण-कस्थापनानुकूलव्यापारोऽवचिनोतेरर्थः।(माणवकं धर्ममिति) परश्रवण-गोचरीभूतशब्दप्रयोगानुकूलव्यापारो ब्रूतेरर्थः।स एव शासनापूर्वकशा-सेरर्थः।(शतं जयति देवदत्तमिति ) विविधकपटपूर्वकपरस्वत्वनिवृत्ति-पूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापारो जयतेरर्थः।(सुधामिति)दण्डग्रहण-पूर्वकान्तःस्थितसारभागोद्धरणानुकूलव्यापारो मन्थेरर्थः । (देवदत्त-मिति) धनस्वामिपरोक्षज्ञानपूर्वकग्रहणानुकूलव्यापारो मुष्णातेरर्थः । (ग्राममिति ) उत्तरदेशसंयोगानुकूलव्यापारो नयतेरर्थः । स एव बला-त्कारपूर्वकहरतिकर्षत्योरर्थः । स एव स्कंन्धग्रहणपूर्वकवहतेरर्थः । ( अर्थनिबन्धनेयमिति ) अत एव तद्राजसूत्रे असौ अस्मान्माम चोद्यं चोदयतीत्यर्थकमहमपीदमचोद्यं चोद्ये इति कैयटोदाहरणं संगच्छते, अत्र चोद्ये इत्यत्र कर्मणि प्रत्यये सति अस्मच्छब्दात्प्रथमा, इदम्-शब्दाद् द्वितीयैवेति । एवं मारीचमुच्चैर्वचनं महार्थमिति भट्टिप्रयोगश्च संगच्छते, इति दीक्षिताशयः । वस्तुतस्तु एवं सति दुहियाचिरुधि-प्रच्छिभिक्षिचिञामित्यादिभाष्योक्तपरिगणने भिक्षिग्रहणवैयर्थ्यापत्तेः, उभयार्थकयाचिग्रहणेनैव सिद्धेः, अतो येषां परिगणनातिरिक्तानां द्विकर्मकत्वमिष्टन्तेषां व्यापाराद्यर्थकत्वेन कर्तुरित्येव सिद्धिरिति दिक् ॥ ननु णिजर्थव्यापारप्रयोज्यफलाश्रयस्यापि कर्तुरित्येव सिद्धेः गतीत्यादिसूत्रं किमर्थमिति चेन्न, णिजर्थव्यापारप्रयोज्यफलाश्रयाणां यदि कर्मत्वं स्यात्तर्हि गत्यर्थादिप्रकृतिकानामेवेति नियमार्थत्वात् । तेन पाचयतीत्यत्र देवदत्तस्य नेति । न चैतावतापि स्वांशे चारितार्थ्या-भाव इति चेन्न, णिजर्थव्यापारप्रयोज्यफलाश्रयातिरिक्तस्यैवेति पूर्वसूत्रे संकोचनाक्षेपात् । एतदेवानुवदति ( गतीत्यादि किमित्या-दिना, अण्यन्तानां किमिति ) णौ कर्तुः कर्मत्वमित्यर्थं गमयति

देवदत्तेन यज्ञदत्तमित्यत्र देवदत्तस्यापि कर्मत्वापत्तिः स्यात्, तदुक्तौ तु अणि कर्तृत्वाभावान्न दोष इति भावः । ग्रामादिप्राप्तेर्गतिम्विनाऽसंभवेन आक्षिप्तगत्यापि गत्यर्थत्वमित्यभिमानेन नीवह्योर्नेत्यस्यारम्भः ननु गतिबुद्धीति सूत्रे बुद्धिर्ज्ञानन्तथा च चक्षुरादीन्द्रियजन्यज्ञानार्थकानां बुध्यर्थपदेन ग्रहणाद् दृशेश्चेति व्यर्थमत आह ( सूत्रे ज्ञानसामान्येति । धात्वर्थसंगृहीतेति "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" इत्यभियुक्तव्यवहारबलेन शब्दरूपकर्मणो धात्वर्थकुक्षिप्रविष्टत्वेनाकर्मकत्वादिति भावः । ननु न विद्यते कर्म येषान्तेऽकर्मका इत्यर्थे देवदत्तेन पाचयतीत्यादावपि कर्मणोऽविवक्षयाअकर्मकत्वेन कर्मत्वापत्तिरत आह ( येषां देशकालेत्यादि ) अयं भावः गतिबुद्धिप्रत्यवसानार्थशब्दकर्मकाणामिति सूत्रन्नियमस्य सजातीयापेक्षत्वेन सकर्मकधातुप्रकृतिकणिजर्थव्यापारप्रयोज्यफलाश्रयाणां यदि कर्मत्वं स्यात्तर्हि गत्याद्यर्थकाणामेवेति नियमार्थमिति । आसयत्सलिले पृथ्वीमित्यादौ कर्तुरिति कर्मत्वे सिद्धेऽकर्मकग्रहणं प्रकृतसूत्रेऽकर्मकग्रहणेन देशकालादिभिन्नकर्माभाववतो ग्रहणमिति ज्ञापनार्थम्, तेनोक्तस्थले न दोष इति । न चोक्तज्ञापनेपि स्वांशे कर्मकग्रहणस्य चारितार्थ्याभाव इति वाच्यम्,सति च सूत्रे अकर्मकग्रहणे सामान्यतो णिजर्थव्यापारप्रयोज्यफलाश्रयेत्यादि नियमे तदतिरिक्तत्वेन संकोचे वा चारितार्थ्यसंभवादिति दीक्षिताशयः नवीनास्तु अविवक्षितकर्मकाणामप्यत्र शास्त्रे कृतपूर्वी कटमित्यादि भाष्यप्रयोगानुरोधेन ग्रहणम् अत एव निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ लावयति केदारं देवदत्त इत्यत्राकर्मकत्वात्कर्मत्वमिति कैयटे स्पष्टम् । एवमविवक्षितकर्मत्वेनाकर्मकत्वान्मातुः स्मर्यते इत्यत्र भावे प्रत्ययः सिद्धः । एवं चात्र सूत्रे अकर्मग्रहणसामर्थ्यात्सर्वथा द्रव्यकर्माभाववतोऽविवक्षितकर्मकस्य च ग्रहणम् । अत एवात्रसूत्रे कालकर्मकाणामुपसंख्यानं कर्तव्यन्न कर्तव्यम् । न च केचित्काल-

भावाध्वभिरकर्मकाः । त एवं विज्ञास्याम क्वचिद्ये अकर्मका इत्युक्तम् । एवं च सत्यभिधाने देवदत्तेन पाचयतीत्यत्राकर्मकत्वेनेष्टमेव कर्मत्वम्, अतिप्रसंगस्त्वनभिधानाद्वारणीय इत्याहुः । अत्र युक्तायुक्ते स्वयमूहनीये इति दिक् । एष्वर्थेष्वाभिनिविष्टानामिति भाष्यप्रयोगाद्न्यतरस्यांग्रहणानुवृत्तिरिति कैयटमताभिप्रायेणाह ( परिक्रयणे इत्यादि ) वस्तुतस्तु अभिनिविशश्चेति सूत्रे अविकृतरूपश्रवणादविकृताया आनुपूर्व्या यत्र श्रवणं तत्रैवास्य प्रवृत्तेः । एवं चान्यतरस्यां ग्रहणानुवृत्तौ व्यवस्थितविभाषाश्रयणे च मन्दप्रयोजनमिति । न चैवमपि "निविशते यदि शूकशिखापदे" इति श्रीहर्षप्रयोगस्य कथं साधुत्वमिति वाच्यम्, संघातस्य विवक्षितत्वेनादोषादिति दिक् । मशकार्थोयं धूम इत्यत्रेव अश्यर्थस्य नेति वार्तिके अर्थशब्दस्य निवृत्यर्थकतया फलितार्थमाह ( अभुक्त्यर्थस्य नेति ) भाष्ये तु वने उपविश्य त्रिरात्रमुपवसतीत्यर्थमाश्रित्य प्रत्याख्यातामिदम् । अत एवोपोष्य रजनीमेकां पञ्चगव्येन शुध्यतीति सिद्धम् । अत्र च कालाध्वनोरिति द्वितीया ( उभसर्वतसोरिति ) उभशब्दसर्वशब्दप्रकृतिकतसन्तयोग इत्यर्थः ( आम्रेडितान्तेष्विति ) तेनोपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय इत्यत्र न द्वितीया, उपरिबुद्धीनामुपरीत्यर्थात् ( ततोन्यत्रापीति ) तेन "फलति पुरुषाराधनमृते" इत्यत्र ऋते शब्दयोगे । आषाढीं यावच्छुद्धः । आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत्पर्वतराजपुत्रीमित्यत्र यावच्छब्दयोगे च द्वितीयासिद्धिः । (जपमन्विति) ज्ञानजनकज्ञानविषयत्वं लक्षणत्वम्, ज्ञानजन्यज्ञानविषयत्वं लक्ष्यत्वम् । तथा च वर्षाज्ञानजनकज्ञानविषयत्वं जपस्येति बोध्यम् ( अनेन बाध्यत इति ) न च विरोधाभावेन संज्ञाया बाध्यबाधकभावाभाव इति वाच्यम्, संज्ञाबोधितपुनर्द्वितीयाविधानसामर्थ्यादित्यर्थकल्पनेनादोषात् । ( नद्या सह संबद्धेति ) तृतीयार्थ इति सूत्रे तृतीयाशब्देन तृतीयासहचरितसहशब्दो लक्ष्यते । तथा च सहार्थ इति लाभः ( सर्पिषोपीति ) अप्रयुज्यमानपदस्यार्थः पदार्थ इत्यपेः पदार्थद्योतकता (संभावनायां लिङिति)

संभावनोत्प्रेक्षा सा चेत्कटकोटिका शंकैवेति(तस्याः)संभावनायाः विषयभूते भवने प्रकृत्यर्थभवने इति यावत्।कर्तृदौर्लभ्येति प्रकृताभिप्रायम्, सर्पिषोपि पिबेदित्यादौ कर्मदौर्लभ्यमपि तथा च सर्पिषोपि स्यादित्यस्मात्सर्पिरवयवबिन्दुकर्तृकदौर्लभ्यप्रयुक्तदौर्लभ्यवती संभावनाविषया सत्तेति बोधः। दौर्लभ्योऽभावः द्वितीया तु नेहेति कर्मक्रियां प्रोक्तवन्तः कर्मप्रवचनीया इत्यर्थकमहासंज्ञया कर्मप्रवचनीयद्योत्यसंबन्धप्रतियोगिवाचकाद्वितीयाविधानादिति, प्रकृते स्वकर्तृकदौर्लभ्यवत्त्वरूपसंबन्धस्य बिन्दुः प्रतियोगी न सर्पिरिति भावः। (कालाध्वनोरिति) अत्यन्तसंयोगो निरन्तरसंबन्धः, स च गुणक्रियाद्रव्यैरभावेन वा तेन मासं भोजनाभाव इति सिद्धम्॥ ( स्वतन्त्रः कर्तेति ) कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् स्वतंत्रत्वम् । पक्वस्तंडुलो देवदत्तेनेत्यत्र कर्मणि प्रत्ययफलस्य प्राधान्येपि देवदत्तस्य कर्तृत्वसिद्धये कर्तृप्रत्यय इति। तथा च धात्वर्थव्यापाराश्रयत्वमिति फलितम्। न च देवदत्तेन पाचयतीत्यादौ णिजर्थकर्तुरुक्तस्वतन्त्रत्वाभावात्कर्तृत्वानापत्तिरिति वाच्यम्, णिचो द्योतकत्वेनादोषात्। अथवा व्यापाराश्रयत्वमेव तत्त्वमित्यदोषात्। अथवाऽन्यानधीनत्वं स्वतन्त्रत्वमिति भाष्यसरणिरेव ज्यायसी। न च णिजन्ते प्रयोज्यकर्तुरन्याधीनत्वेन दोषो दुरुद्धर इति वाच्यम्, स्वव्यापारे सर्वेषामन्यानधीनत्वात्। प्रयोज्यप्रयोजकव्यवहारस्तु उत्तरव्यापाराधीन इति भाष्याशय इति दिक्। ( साधकतममिति ) यद्व्यापाराव्यवधानेन क्रियाया निष्पत्तिस्तत्प्रकृष्टम्। अथवा कारकान्तरनिष्ठव्यापारसंबन्धावच्छिन्नक्रियाहेतुत्वाभावे सति क्रियाहेतुत्वम्। वस्तुतस्तु व्यापारवत्त्वे सति कारणत्वन्तत्त्वम्। न च कार्य्यमात्रे प्रयत्नवदात्मनो व्यापारस्य सत्त्वादात्मनोपि करणत्वापत्तिः, इष्टत्वात्। अथवा फलानुकूलकर्तृव्यापारवत्त्वन्तत्त्वम्। अस्ति च कुठारेण छिनत्तीत्यादौ छिदानुकूलकर्तृसंयोगादिमत्त्वं कुठारादौ।न च गृहस्थाल्याद्यधिकरणस्यापि कर्तृव्यापारवत्त्वात्करणत्वापत्तिरिति चेदिष्टत्वात्।

स्थाल्या अन्नं साधयतीति प्रयोगादित्यलं पल्लवितेन ॥ ( तमप्ग्रहणं किमिति ) क्रियते अनेनेति करणमिति व्युत्पत्त्या साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति तमप्ग्रहणं व्यर्थमिति प्रष्टुराकूतम् । इदमेव तमप्ग्रहणं कारकाधिकारे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते इति ज्ञापयति, तेन गंगायां घोष इति सिद्धम् । अन्यथा अधिक्रियते अस्मिन्नित्यधिकरणमिति महासंज्ञयैवाधारे लब्धे आधारग्रहणं सर्वावयवव्यासयाधारस्यैव ग्रहणमिति बोधनार्थं विष्यति, ततश्च तिलेषु तैलं दध्नि सर्पिरित्यादावेव स्यान्नतु गंगायां ोष इत्यादिगौणाधारे नहि गंगातीरं वा सर्वावयवैर्व्याप्ता तीरधर्मस्य ोषाधारत्वस्यात्यन्तसामीप्यात्प्रवाहे आरोपादिति समाधानकर्तु- ोचितस्याशयः । यदि च महासंज्ञया तादृशार्थलाभासमर्थान्प्रति ाधारादिपदं चरितार्थमिति उक्तज्ञापनासंभवात् प्रकृते कथं सप्तमीत्यु- ्यते तदा आधारपदे स्वरितत्वप्रतिज्ञया स्वरितेनाधिकं कार्य्यमित्यर्थाद् ौणाधारस्यापि ग्रहणादिति भाष्यगूढार्थविद आहुरिति दिक् । 'प्रकृत्यादिगणाज्जाता तृतीया तु तदारमताम्।अवच्छेदकतावृत्तिप्रकार- ्वादि संशति" इति सिद्धान्ताद्यथायथं तृतीयार्थो द्रष्टव्यः (दिवः कर्म चेति ) करणानुवृत्त्यैव सिद्धे चकार उभयसंज्ञासमावेशार्थः, तेनाक्षै- र्दीव्यते इत्यत्र करणत्वात् तृतीया, कर्मत्वादकर्मकप्रयुक्तपरस्मैपदाभाव इत्यलम् । ( सहयुक्तेऽप्रधाने इति ) सहेनाऽप्रधाने इति सिद्धे युक्तग्रहणं शब्दविशेषस्यानादरमिति बोधयति, तेनार्थयोगेपीत्याह ( सहार्थेनेति ) सहार्थः साहित्यम्, तच्च समभिव्याहृतक्रियादिसमान- कालिकतत्क्रियादिमत्त्वम्। क्वचित्समानदेशक्रियावत्त्वमपि साहित्यम्। अत एव तिलवापोत्तरन्तत्रैव क्षेत्रे माषवापे तिलैः सह माषान्वपतीति सिद्धम् । यद्यपि आगमनक्रियाकर्तृत्वादेव पुत्रात् तृतीया सिद्धा तथापि पुत्रेण सह स्थूल इत्यर्थमिदम्। पुत्रेण सहागत इति वाक्यात्पुत्र- कर्तृकागमनसमानकालीनागमनकर्ता इति बोधः । "सहैव दशभिः पुत्रैर्भारं वहति गर्धभी " इत्यत्र पुत्रेषु भारवहनकर्तृत्वाभावेपि

विद्यमानपदाध्याहाराद्विद्यमानत्वं सहार्थः । तथा चैककालीनत्वसम्ब-न्धेन दशपुत्रवृत्तिविद्यमानत्वविशिष्टविद्यमानत्वाश्रय इति बोधे एक-कालीनत्वं सहार्थ इति फलितम् । एवं तव यशसा सह मूर्च्छति शङ्कु-रित्यत्राप्यूहनीयमिति दिक् । उपपदविभक्तेरिति न्यायेनैव पितृशब्दात् तृतीयाभावे सिद्धे अप्रधानग्रहणं भाष्ये प्रत्याख्यातम् । (येनाङ्गविकार इति ) अङ्गमस्यास्तीत्यङ्ग अर्शआदित्वादच् , अङ्गस्य विकारोऽङ्ग-विकारः प्रयोज्यत्वं षष्ठ्यर्थः । येनेत्यत्राभेदस्तृतीयार्थः । तथा च यदभिन्नाङ्गवृत्तिविकारप्रयोज्याङ्गिनो विकारो लक्ष्यते ततस्तृतीयेत्यर्थः षष्ठ्यपवादोयम् । तेनाक्षिसंबंधित्वलाभः ( अङ्गविकारः किमिति ) अर्शाद्यजन्तङ्किमर्थमिति प्रश्नः । अक्षि काणमस्येति प्रथमां बाधित्वा अत्रैव स्यात् । अक्ष्णा काण इत्यत्र नैव स्यादिति भावः । लेशतोपि दर्शनसामर्थ्यहीनत्वं काणत्वम् ( इत्थंभूतलक्षण इति ) प्राप्त्यर्थ-कादूभूधातोः कर्तरि क्तः, तस्य चेत्थंभूतशब्देन समासस्तथा च कञ्चित्प्रकारं प्राप्तस्येत्यर्थः । यद्यपि जटाभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियाकरणत्वादेव तृतीया सिद्धा तथापि करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदम् । न च कमंडलुपाणि छात्रमद्राक्षीदित्यत्र कमण्डलुपदात् तृतीयापत्तिः । न चोत्पन्नायास्तृ-तीयायाः सुपो धातिवति लुक् स्यादिति वाच्यम्, कृते समासे तस्या उत्पत्त्या समासरूपप्रातिपदिकावयवत्वात् इति वाच्यम् । इत्थंभूतस्य यत्र लक्षणवाचकात्पृथगुपस्थितिस्तत्रैवानेन तृतीयाप्रवृत्तिर्लक्ष्या-नुरोधादिति कल्पनेनादोषादिति कैयटे स्पष्टम् । शेखरे तु कमण्डलु-पाणिशब्दादत्र तृतीयाप्रवृत्तिः, कमण्डलुयुक्तपाणित्वस्य लक्षणत्वेन तस्यैव तद्वाचकत्वात् । अत एव कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणमित्युक्तं भाष्ये । तदेवेत्यस्य कमण्डलुपाणित्वमेवेत्यर्थः कमण्डलोर्लक्षणत्वे हि स एव वदेत् । किं च कमण्डलुशब्दात्तृतीया विधानेपि तन्मध्यपतितन्यायेन तस्याः प्रातिपदिकावयवत्वमक्षतमेव । अत एव नरम्मन्य इत्यत्र अभिधानसामर्थ्यान्न लुगिति भाष्ये स्थित-

मित्युक्तमिति दिक् । ननु हेतुर्नाकारणं बीजं निदानं त्वादिकारण-
मिति पारिभाषितहेतोः करणस्वरूपतया करणतृतीययैव सिद्धे हेता-
विति सूत्रं व्यर्थमित्याशंक्य हेतुकरणयोर्भेदं दर्शयति ( द्रव्यादीति )
आदिना गुणक्रिये । तथा च गुणक्रियाद्यन्यतमत्वे सति नियतव्यापारा-
भाववत्त्वम् हेतुत्वम् द्रव्यगुणक्रियाद्यन्यतमत्वे सति नियतव्यापारवत्त्वं
करणत्वमिति फलितम् । एवं च दण्डे व्यापारसत्त्वेपि क्रियाजनकत्वा-
भावान्न करणत्वम्, पुण्ये क्रियाजनकत्वेपि निर्व्यापारत्वान्न करण-
त्वमिति भावः । ( कर्मणा यमभिप्रैतीति ) सम्यक् प्रदीयतेऽस्मै तत्सं-
प्रदानमित्यन्वर्थसंज्ञाबलाद्दानार्थकधातुयोगे एवास्य प्रवृत्तिस्तेन रजक-
स्य वस्त्रं ददातीत्येव दानञ्चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकपरस्व-
त्वोत्पत्त्यनुकूलव्यापारः, अत्र तु ददातिप्रयोगो भाक्तः, अत एवाजां ग्रा
मं नयति हस्तं निदधाति वृक्षे इत्यादौ न संप्रदानत्वमिति वृत्तिकारः ।
भाष्ये तु नान्वर्थतायामाग्रहः । अत एव खण्डिकोपाध्यायः शिष्याय
चपेटां ददातीति भाष्यप्रयोगः संगच्छते । अत एव दासगोघ्नौ संप्रदान
इत्यपि संगच्छते कर्मणा यमभिप्रैतीत्युक्त्या च यमिति निर्दिष्टस्य शेषि
त्वं विशेष्यत्वं कर्मणश्च शेषत्वं विशेषणत्वं च लभ्यते प्रकृतेऽजां ग्राम
मित्यादौ तदभावान्न संप्रदानत्वमिति मनोरमायां स्थितम् । यद्यपि
तादर्थ्यचतुर्थ्यैव गतार्थन्तथापि संप्रदानत्वबोधाय कारकप्रयुक्तस्वराय
च सूत्रमिति दिक् । रुच्यभिलष्योः समानार्थत्वमाशंक्य समाधत्ते
(अन्यकर्तृक इति) अयं भावः हरिर्भक्तिमभिलष्यतीत्यत्र रुच्यर्थकत्वेन
चतुर्थी नाशंक्या प्रकृतसूत्रे रुचेर्वैलक्षण्यात् । तथा हि अन्यकर्तृक इति
अर्थादभिलष्यतिकर्त्रपेक्षया यदन्यदभिलष्यतिकर्म तत्कर्तृक इत्यर्थः
तथा च हरिर्भक्तिमभिलष्यतीत्यत्रत्यकर्तुर्हरेरन्यत्कर्म भक्तिरिति, सा
च कर्त्री हरये रोचते इत्यत्रास्तीति तत्रैव चतुर्थी नान्यत्र हरिं प्रीणयती-
त्यत्र तु प्रीयमाण इति निर्देशात्प्रीधातुयोगे नेति कल्पनात् । वस्तुतस्तु
यत्किंचिद्विषयकप्रीतिव्यधिकरणव्यापाराश्रयोऽभिलषतेः कर्ता यत्कि-
ञ्चिद्विषयकप्रीतिसमानाधिकरणव्यापाराश्रयो रोचयतेः कर्तेति वैल-

च्यण्यादभिलप्यते: रुच्यर्थत्वाभावान्न दोष इति शेखरे स्पष्टम्। ननु नमस्करोति देवानित्यादौ चतुर्थी कुतो नेत्यत आह ( उपपदविभक्ते-रिति)इयं च परिभाषा सह युक्तेऽप्रधाने इति सूत्रे प्रधाने प्रथमासाध-नाय अप्रधानग्रहणप्रत्याख्यानाय च वचनरूपेण भाष्ये पठिता केचित्तु प्रकृतसूत्रे योगग्रहणाज्ज्ञापितेयमित्याहुः कैयटादयस्तु क्रियाकारकयोः सम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गा उपपदार्थेन तु यत्किंचित्सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरंगत्येतन्मूलिकेयमि-त्याहुस्तन्न, यस्य च भावेन भावलक्षणमिति सप्तम्यपेक्षणाधिकरण-सप्तम्या बलवत्त्वमनया भाष्ये साधितत्वात्। यस्य च भावेनेति सप्तम्या अपि क्रियाकारकभावसम्बन्धनिमित्तकत्वात्। कारकविभक्तित्वं च कर्त्रादिषट्कान्यतमार्थकविभक्तित्वम्, वस्तुतोऽर्थवन्नमः शब्दस्य ग्रह-णेन प्रकृतेऽर्थवत्त्वाभावान्न दोष इति दिक्। ननु ध्रुवस्थैर्य्ये इति धातु निष्पन्नध्रुवशब्दस्य स्थैर्यार्थकत्वेन धावतःअश्वात्पततीत्यत्र कथमपा-दानत्वमिति चेन्न, विभागजनकव्यापारानाश्रयत्वे सति विभागाश्रय-स्यैवत्वमिति स्वीकारात्। न चैवमपि कुड्यात्पततःअश्वात्पततीत्यत्र व्यापारानाश्रयत्वाभावेन कथमश्वस्यापादानत्वमिति वाच्यम् तद्धात्व-र्थविभागेत्यादिनिवेशनादोषात्। न चैवमपि परस्परस्मान्मेषावपसरत इत्यत्र कथमपादानत्वमिति वाच्यम्, एकनिष्ठां गतिम्प्रति अपरस्य अपरनिष्ठां गतिम्प्रति अपरस्य कर्तृभेदेन क्रियाभेदमाश्रित्य अपादान-त्वस्य निर्विवादत्वात्,मेषशब्दस्य नापादानत्वं शंक्यम्, लक्ष्यानुरोधा-त्परस्परशब्दोपात्तमेषरूपे अपादानत्वविवक्षा मेषशब्दोपात्तमेषरूपे कर्तृत्वविवक्षेति बोध्यम् ( पञ्चम्यतसर्थप्रत्ययेनेति ) अत्र प्रत्ययग्रहणेन श्रूयमाणप्रत्ययस्यैव ग्रहणादिदं चिन्त्यम् ( प्रभृतियोगे पंचमीति ) प्रभृत्यर्थयोग इत्यर्थः। अपादाने पंचमीति सूत्रभाष्यात्, तत्र हि यतश्चाध्वकालनिर्माणान्ततः पंचमी कार्तिक्या आग्रहायणीमासे इति वार्तिकप्रत्याख्यानाय इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणीमास इत्युक्तम्। अनेन च प्रभृतिशब्दा-

भावेऽपि तदर्थसत्तामात्रेण पंचमी भवतीति कल्पनात् । अन्यथा प्रभृतिपदाभावे पंचमीविधानार्थं वार्तिकावश्यकत्वेन तत्प्रत्याख्याना-संगतिः स्पष्टैवेति । अत एव मेरुपृष्ठादारभ्य ध्रुवपर्य्यन्तं ग्रहनक्षत्र-तारागणचित्रितोन्तरिक्षलोक इत्यत्र प्रभृत्यर्थकारभ्यशब्दयोगे पंचमीसिद्धिः । अवीचिमारभ्य मेरुपृष्ठपर्य्यन्तम्भूलोक इत्यत्र आरभ्ये-त्यस्य गृहीत्वेत्यर्थेन प्रभृत्यर्थकत्वाभावान्न पंचमीति दिक् ॥ ( धाना-पेषणमित्यादि ) कर्तृकर्मणोरिति षष्ठ्या समासोत्र बोध्यः । अनेन षष्ठीविधाने प्रतिपदविधाना षष्ठी न समस्यत इति निषेधात्समासो न स्यादित्याशयः । दिवस्तदर्थस्येति सूत्रे द्वितीयां ब्राह्मणे इति सूत्रे द्वितीयाविधानार्थमिति भाष्यप्रामाण्यात् । शेषपदासंबन्धात् तेनाशये-नोदाहरति ( शतस्य दीव्यतीति ) ननु कर्तृकर्मभ्यां क्रियासन्निधाप्यते तद्वाची च धातुरेव धातुभ्यश्च लिङ्कृतोर्विधानेऽपि तिङ्योगे न लोकेति निषेधात्कृद्योगे एव भविष्यतीति कृद्ग्रहणं व्यर्थमित्याशयेनाशंक्य समाधत्ते ( कृति किमित्यादिना ) अयं भावः उक्तरीत्या कृतो लाभे कृद्ग्रहणं व्यर्थं सत्कृदंतमात्रनिष्ठशक्तिग्रहप्रयोज्योपस्थितिविषयीभूत-क्रियानिरूपितकर्तृकर्मणोर्यथा स्यात् तद्धितान्तनिष्ठशक्तिग्रहप्रयो-ज्योपस्थितिविषयीभूतक्रियानिरूपितकर्तरि कर्मणि च मा भूदिति ज्ञापयति, तेन कृतपूर्वी कटमित्यत्र न, अत्र कर्मणोऽविवक्षया भावे क्ते कृतं पूर्वमिति विग्रहे सुप्सुपेति समासे पूर्वादिनिः,सपूर्वाच्चेति इनिः,तत्र कर्मयोगविवक्षया कृतपूर्वीकटमिति । अत्र तद्धितान्तशक्तिग्रहप्रयोज्यो-पस्थितिविषयीभूतत्वं क्रियायां निर्बाधमिति । न चात्र निष्ठान्तत्वेन न लोकेति निषेधान्नियमफलं चिन्त्यमिति वाच्यम् । निष्ठान्तमात्रवृत्ति शक्तिग्रहप्रयोज्योपस्थितिविषयीभूतेत्याद्यर्थेनादोषात्, न च तण्डुलानां पाचकतर इत्यादावपि षष्ठी न स्यादिति वाच्यम् पाचकादेः पृथक्-प्रयोगसत्त्वेन तद्धितान्तमात्रवृत्तिशक्तिग्रहप्रयोज्योपस्थितेरभावात् । सकर्मकधातुप्रकृतिकभावक्तान्तस्यान्यत्र प्रयोगाभावात् । अत एव भाष्ये तद्धिते मा भूदित्येवोक्तन्न तु तद्धिताधिक्य इति दिक् । स्तोकं-

पाक इत्यादौ षष्ठी नाशंक्या, कर्तृसाहचर्य्यात् धात्वर्थ भेदसम्बन्धेनान्वयिन एव कर्मणो ग्रहणात्। अत्र तु फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात् कर्मत्वमिति द्वितीयासिद्धिः। स्तोकस्य धात्वर्थविक्लित्यावभेदेनैवान्वयात् । घञन्तशक्तिवादिनैयायिकमते तु षष्ठी भवत्येवेति केचित्। अत्रत्यविचारस्तु बहुतर इति छात्रैरुपेक्षणीयः ( आधारोऽधिकरणमिति ) अत्र कारके इत्यधिकारात्क्रियाजनकत्वस्यैवोपस्थितत्वादाधारः क्रियाया एव गृह्यते, तत्र साक्षादाधारे कर्मकर्तृसंज्ञाभ्यां बाधात् परंपरया तदाधारस्य ग्रहणम्, तत्रापि लक्ष्यानुरोधादाधारपदे स्वरितत्वप्रतिज्ञानाच्च कर्मकर्तृद्वारैव गृह्यते। तदाह कर्तृकर्मद्वारेति। अत्र च क्रियान्वयोपि तद्द्वारक एव, यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः। अत एवाक्षशौण्ड इत्यादौ समासः। एकदेशावच्छेदेन श्लेषेऽपि श्लेषस्य समीपमुपश्लेषिकमित्यभिप्रायेणोदाहरति (कटे आस्ते इति) सकलावयवव्याप्तौ व्यापकाधारत्वम् यथा तिलेषु तैलमित्यादौ ( क्तस्येन्विषयस्येति ) इन् प्रकृतिकान्तस्येत्यर्थः, तेन कृतपूर्वी कटमित्यत्र न ( अधीती व्याकरणे इति) अत्र कर्मणि सप्तमीविधानाद्भावे एव क्तः। अन्यथाऽभिहितत्वान्न स्यादिति बोध्यम्। अत्र च कर्मपदेन कालातिरिक्तस्यैव ग्रहणात्, तेन मासमधीती व्याकरणे इत्यत्र नेति कैयटादौ स्पष्टम् ( चर्मणि द्वीपिनमित्यादि ) द्वीपिचर्मणोरण्डकोशमृगयोश्च समवायः इतरयोः संयोगः मुक्ताफलाय करिणं रघुवीर हन्तीत्यत्र मुक्ताफलं लब्धुमित्यर्थे क्रियार्थोपपदस्येति चतुर्थी ( यस्य च भावेनेति ) भावः क्रिया सा लक्ष्यते येन तद्भावलक्षणम्। तथा च यद्वृत्तिक्रियाप्रयोज्यक्रियान्तरं लक्ष्यते ततः, अर्थात् ज्ञापकक्रियाश्रयवाचकात्सप्तमीत्यर्थे गोषु दुह्यमानपदाभ्यां सप्तमी सिद्धा, तत्र ज्ञापकक्रियाश्रयवाचकः कर्ता कर्म च, तत्र च ब्राह्मणेष्वधीयानेष्वष्टसौ गत इति कर्तर्युदाहरणम्। कर्मण्याह ( गोषु दुह्यमानास्विति ) अत्र काचित्क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति, यथा प्रकृते काचित् स्वाधारका-

ल्यव्यवहितपूर्वकालेन यथा गोषु धोद्यमानासु गत इत्यत्र कान्वित
स्वाधारकालानन्तरकालेन यथा गोषु दुग्धासु गत इत्यदाविति दिक् ॥
( यतश्च निर्द्धारणमिति ) जातिगुणक्रियासंज्ञाभिरिति विशिष्टस्या-
ध्याहारः । तथा च यतः अर्थात्स्वघटितसमुदायात्, निर्द्धारणमर्थात्
स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकंपृथक्करणं, तद्वाचकात्पष्ठी-
त्यर्थः । स्वघटितसमुदायावधिकस्वेतरसमुदायघटकव्यावृत्तधर्मकर-
णकपृथक्करणरूपनिर्द्धारणविषयत्वरूपोऽवयवावयविभावरूपश्च सं-
बन्धो विभक्त्यर्थः । अत्र करणपदेन च श्रेष्ठत्वादिकमेव गृह्यते, प्रत्या-
सत्त्या, तथा च नृणामित्यादिवाक्यात् नृसमुदायावधिकद्विजेतरनर-
व्यावृत्तश्रेष्ठत्वकरणकपृथक्करणरूपनिर्द्धारणविषयो नृसमुदायावयवो
द्विजः श्रेष्ठ इति बोधः । निर्द्धारणविषये तिरोहितावयवभेदविवक्षया
एकवचनन्त्वसाध्वेवेति भाष्ये स्पष्टमिति दिक् ( पंचमीविभक्ते इति )
विभागोऽत्र भेदः । निर्द्धारणमित्यनुवर्त्तते । निर्द्धारणे च सर्वत्र यथाक-
थञ्चिद्भेदस्य सत्वेन विभक्तग्रहणसामर्थ्याद्यत्र भेद एवेति नियमादत
आह भेद एवेति ( माथुरा इति ) पाटलिपुत्रावधिकनिर्द्धारणविषया माथुरा
इति बोधः । ( नक्षत्रेण लुविति ) लुप्शब्देन लुप्संज्ञया लुप्यमान-
प्रत्ययार्थो लक्ष्यते ( मूलेनेति ) नक्षत्रेण युक्तः काल इत्यण् लुपविशेषे
इति लुप् ( स्वस्वामिभ्यां पर्य्यायेण सप्तमीति ) यस्य चेश्वरवचनमि-
त्यत्र विनिगमनाविरहाल्लक्ष्यानुरोधाद् व्याख्यानाच्च निरूपितत्वं वृत्ति
त्वं वा पष्ठ्यर्थः, तथा च यन्निरूपितेश्वरत्वं गम्यते इति यद्वृत्तीश्वरत्वं
गम्यते इति चार्थः । क्रमेणोदाहरति अधिभुवीति । इति फक्किकामर्म-
विवृतौ कारकप्रकरणम् ॥ * ॥ * ॥ * ॥

—०—

( समर्थः पदविधिरिति ) पदमुद्दिश्य यो विधीयते समासादिः स
समर्थाश्रितः, अर्थात्सामर्थ्यमाश्रित्य भवतीत्यर्थः । सामर्थ्यं चात्र न

व्यपेक्षा, समासादिवृत्तिषु तस्यासम्भवात्, किन्त्वेकार्थीभावः, स च विशेष्यविशेषणभावावगाह्येकार्थोपस्थितिजनकत्वरूपः। अस्ति च कृत्तद्धितैकशेषसमाससनाद्यन्तधातुरूपासु पंचस्वपि वृत्तिषु वैयाकरणमते समासादौ समुदायशक्तिस्वीकारात्। अत एव राजपुरुष इत्यादिसमासे ऋद्धस्येत्यादिविशेषणायोगो न सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति तु फलितार्थकथनम्। पदार्थैकदेशतया अन्वयासंभवात् पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति व्युत्पत्तेः कथन्तर्हि महादेव इत्यादौ आन्महतः समानाधिकरणे इत्यात्वम्, महच्छब्दस्यार्थवत्ताभावादिति चेत्सत्यम्, सूत्रारंभसामर्थ्येन भूतपूर्वगतेराश्रयणात्। अतएव पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यादिप्राचीनमतं संगच्छते, समासशक्त्यनङ्गीकर्तृनैयायिकानान्तु विशेषणाद्यन्वयादिदोषः, प्रकारांतरसाध्य एवेति दिक् ( भूतपूर्वे चरडिति ) पूर्वं भूतो भूतपूर्व इत्यत्र उभयोः प्रथमान्तपदयोर्ध्यतया विनिगमनाविरहादुभयोः पूर्वनिपातापत्तौ प्रकृतनिर्देशस्योपपत्तौ ज्ञापकासंभव इति तु न वाच्यम्, उपसर्जनमिति महासंज्ञया समासावयवीभूतसमासशास्त्रीयप्रथमान्तपदबोध्यविशेषणरूपोपसर्जनं पूर्वम्प्रयोज्यमित्यर्थात् प्रकृतवाक्यात्पूर्वकालिकभवनाश्रय इति बोधे शास्त्रीयोपसर्जनत्वसमानाधिकरणलौकिकोपसर्जनत्ववतः पूर्वशब्दस्यैव पूर्वनिपातप्राप्तौ निर्देशासंगतिः स्पष्टैवेति। न च भवनाश्रयपूर्वकालिक इत्यर्थे भूतशब्दस्यापि विशेषणताप्रयोजकत्वेन पूर्वनिपातसिद्धौ प्रकृतप्रयासः अकिंचित्कर इति वाच्यम्, क्रियाभेदाय कालस्तु संख्यासर्वस्य भेदिकेति सिद्धान्तात्प्रकृतबोधासंभवात्। वस्तुतस्तु सुप्सुपेतिशास्त्रस्य सुबन्तार्थनिष्ठप्रकारतानिरूपितमुख्यविशेष्यताप्रयोजकत्वेनाभिमतो यः सुबन्तस्तेन तत्समस्यते इत्यर्थे पूर्वशब्दस्यैव पूर्वनिपातप्राप्तौ निर्देशासंगतिः स्पष्टैवेति दिक्। ननु उक्तार्थानामप्रयोग इति न्यायान्निपातेनाधिकरणार्थोक्तौ तदर्थकसप्तमीविभक्ते-

क्तिसंभव एव नेत्यत आह ( अत्र निपातेनेति ) अव्ययसुबन्तेन समा-
सस्तु नेष्टः प्रत्यासत्त्या यद्विभक्त्यर्थवाचकाव्ययेन समासश्चिकीर्षि-
तस्तद्विभक्त्यर्थवाचकसुबन्तस्यैव ग्रहणादिति दिक् ( द्वितीयापञ्च-
म्योर्विधानसामर्थ्यादिति) इदमयुक्तम् मध्यार्थकसमयाशब्दयोगे द्विती-
याविधानस्य दूरार्थकाराच्छब्दयोगे पंचमीविधानस्य चारितार्थ्यात्
( भाष्यप्रयोगादिति ) अनेन भाष्यप्रयोगेण सूत्रगृहीताव्ययेन सह
समासाभावबोधनात् । ननु अविग्रहो नित्यसमासः, अस्वपदविग्रहो
वेति वक्ष्यमाणत्वान्नित्यसमासे वाक्यं दुर्लभमत आह ( प्रतिशब्द-
स्येति ) इदं प्राचीनरीत्या वस्तुतस्तु प्रतिस्थानमित्यादौ षत्वाभावसं-
पादनाय संज्ञाविधानस्य चारितार्थ्यात् । कथन्तर्हि विग्रह इति भव-
तैवोच्यतामित्युच्यते । अर्थमर्थम्प्रति प्रत्यर्थमिति सरूपसूत्रस्थभाष्य-
प्रयोगाद्यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात्समासा-
प्राप्तेर्वाक्यं साधु, समासे च समासेन वीप्साया उक्तत्वेन न द्विर्वचन-
मिति दिक् । समृद्धिसंपत्त्योः पर्य्यायत्वमाशंक्य समाधत्ते ( ऋद्धेरा-
धिक्यमिति ) अनुरूपो योग्यम्, आत्मभावः च्छत्रत्वादिः (तथा हर इति)
तथाशब्दस्य सादृश्यवाचकत्वेपि न समासः, प्रत्यासत्त्या सादृश्यप्रति-
योगिवाचकेनैव तदर्थकाव्ययस्य समासविधानात् । नन्वेकार्थीभाव-
विकल्पविधायकाविभाषाऽधिकारो व्यर्थः, एकार्थीभावविवक्षायां समा-
सस्य व्यपेक्षाविवक्षायां वाक्यस्य च सिद्धेः।समासविकल्पविधायकस्तु
नायम् व्याख्यानात् इति चेन्न, लक्षणैकचक्षुष्कान्मन्दान्प्रति क्व एका-
र्थीभावो नित्यः क्व वैकल्पिकः क्व नास्त्येवेति व्यवस्थाबोधनार्थमाव-
श्यकत्वात् । लक्ष्यैकचक्षुष्कान्प्रति तु भाष्ये प्रत्याख्यातमेवेति बोध्यम्
(एतत्सामर्थ्यादेवेति)अत्रैतत्करणसामर्थ्यादित्यर्थः। नन्वेवं सुप्सुपेत्य-
स्यापि नित्यत्वापत्तिस्तथा च विस्पष्टं पटुरिति विस्पष्टपटुरिति विग्रहप्र-
दर्शनपरकभाष्यविरोधः स्यादत आह (सुप्सुपेति) समासविधानादिति
सुप्सुपेति विहितसमासोद्देशेनाव्ययीभावसंज्ञाविधानेनैव सिद्धे समा-
ससंज्ञाविधानसामर्थ्यादिति भावः। न चाव्ययमित्यादिसूत्रेण समासवि-

धाने अव्ययमित्यस्य समासशास्त्रीयप्रथमान्ततया तद्बोध्यस्योपस-र्जनसंज्ञायामुपसर्जनं पूर्वमिति पूर्वप्रयोग इष्ट इदानीं न स्यादिति वाच्यम् समासत्वव्याप्यसंज्ञाविधायकशास्त्रघटकप्रथमान्तपदबोध्यानामुपस-र्जनसंज्ञेत्यर्थकरणेनादोषात् । (समासान्ता इति) अत्र समासपदमलौ-किकप्रक्रियावाक्यपरम्, तेन समासात्प्रागेवान्तरंगत्वादुत्तरपदावय-वीभूय समासान्तः प्रवर्त्तते तेन बहुराजकुमारीक इत्यादौ गोस्त्रियोरिति ह्रस्वत्वन्न यदागमपरिभाषया उत्तरपदावयवत्वेपि स्त्रीप्रत्ययान्तसमास-रूपप्रातिपदिकत्वाभावात् । गोस्त्रियोरित्यस्याप्राप्तिरिति दिक् । इत्यव्ययी-भावः ॥ ननु ब्राह्मणस्य शुक्ला दन्ता इत्यत्र सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेति निषेधात्समासाप्राप्त्या कथमिदमुदा-हरणं दत्तमिति चेदत आह ( यदा प्रकरणादिनेति ) इति कैयट इति अयन्निषेधः कारकषष्ठ्या समासस्यैव अनन्तरस्येति न्यायात्, व्याख्या-नाच्चेत्याशयः । वस्तुतस्तु तृनो योगे न लोकेति षष्ठीनिषेधात् तृच एव ग्रहणे सिद्धे तृजकाभ्यां कर्त्तरीति सूत्रे चकारोच्चारणेन तत्प्रयोजको हेतुश्चेति सौत्रप्रयोगेण च प्रकृतनिषेधानित्यत्वज्ञापनात् । ननु समाना-धिकरणाधिकाराद् युवजरतिरित्यत्र एकार्थबोधकत्वरूपसामानाधि-करण्याभावात्कथं समास इत्यत आह ( युवत्यामेवेति ) जरत्यां तु न युवत्यारोपस्तथा सति विशेषणं विशेष्येणेति सिद्धे पूर्वनिपाताय कृतस्य सूत्रस्य वैयर्थ्यापत्तेः । ननु अविघ्नमित्यत्रापि परत्वात्तत्पुरुषः स्यात्, अव्ययीभावस्य निर्मक्षिकमित्यादौ सावकाशत्वात् । अन्यथा अनुपलब्धिरविवाद इत्यादि न सिध्येदत आह ( अर्थाभावेनेत्यादि ) भाष्यवार्तिकेत्युपलक्षणम् । प्राचीनरत्या पूर्वपदार्थप्राधान्ये अव्ययी-भावः, उत्तरपदार्थप्राधान्ये तत्पुरुष इति विचारस्य सुलभत्वात् । तथा चासंहितमित्यस्य संहिताभाव इत्यर्थः । असन्देह इत्यस्यारोपित-संदेहो निश्चय इत्यर्थबोधे तदभावप्रतीतिरार्थाभेदेन धर्मिण आरोपात् । एवमनुपलब्धिपदेपि बोध्यम्, न्यायसिद्धे एव लिङ्गदर्शनं मूलो-क्तमिति तत्त्वम् । यद्यपि अविद्यमाना विघ्ना यस्मिन्निति बहुव्रीहि-

णा अविघ्नं कर्मेति प्रयोगः सिद्ध्यति तथाप्युत्तरे कर्माणि अविघ्नम- स्वित्यादिप्रयोगा अव्ययीभावं विना न सिध्यन्तीति दिक्। ( ह्यहीन इति ) समासान्तविधेरनित्यत्वान्न टच्। सति च तस्मिन्नयादेशः स्यात्। न च नान्तस्य खे परे टिलोपविधानसामर्थ्यान्न टजिति वाच्यम्, अहीन इत्यत्र सावकाशत्वात्। समासान्तस्यानित्यत्वे प्रमाणन्तु अश्वादिगणे राजन्शब्दपाठः, स हि प्रतेरंश्वादयस्तत्पुरुषे इत्यन्तोदात्ताय क्रियते अस्य नित्यत्वे टचैवान्तोदात्तत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति दिक्। ( स्त्रियामदन्तत्वादिति ) नन्विह स्त्रीत्वं दुर्लभम् रात्राह्नाहाः पुंसीति वचनादिति चेन्न, सर्वमहः सर्वाह इत्यत्रोपपत्तेरस्य तदूवचनस्य लुप्ते प्रत्यये लुपि युक्तवद्व्यक्तिवचने इति वाच्यम्। ठणो- इत्यनेन बाधात्। न च ठणन्तत्वेन ङीपो दुर्वार इति वाच्यम्। यो ऽकार इत्यर्थे वर्णाश्रयत्वाद् वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधात्। न चैवमपि टचाष्टित्त्वेन ङीपो दुर्वार इति वाच्यम्, टचः समासान्ततया तदन्तस्य तद्धितार्थम्प्रत्युपसर्जनत्वात्। न च संख्यापूर्वो द्विगुरिति द्विगौ द्विगोरिति ङीप् स्यादिति वाच्यम्, अपरिमाणविस्ताचितेति निषेधात्, अतष्टापेवेति दिक्। ननु लिंग- विधायकप्रकरणं व्यर्थम् अर्द्धनावमित्याद्यर्थं लोकाश्रयत्वाल्लिङ्गस्येत्य- स्यावश्यकत्वेनाश्रयणीयतया तेनैव सिद्धेरिति चेत्सत्यम्, जात्याख्या- यामित्यादिसूत्रसमूहवदिष्टापत्तेरिति ध्वनयन् प्रकृताननुपयुक्तान्यपि तानि व्याचष्टे ( जात्याख्यायामित्यादि ) जातेः प्राधान्येनाख्याया- मित्यर्थः। जातेरेकत्वेन एकवचनमेव प्राप्नोतीत्ययमारम्भः। एकत्वं चात्र बहुवचनार्थः, एकस्मिन्नर्थे वर्त्तमानशब्दो बहूनामर्थानां वचनं बोधको भवतीत्यर्थादर्थातिदेशोयमित्याह ( एकोप्यर्थ इत्यादि ) जातौ संख्यान्वये एकवचनस्य व्यक्तौ संख्यान्वये बहुवचनस्य च सिद्धत्वादिदं भाष्ये प्रत्याख्यातमिति दिक्। ( सविशेषणस्येति ) इदं मुख्यार्थे बहुवचननिषेधाय, यदा तु अस्मच्छब्दस्य स्वघटिते उद्भूतावयवभेदसमुदाये लक्षणा, तदा बहुवचनं भवत्येव, अत एव,

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः वयमपि कुब्जाः किमौदास्यै इत्यादि सिद्धम् । गार्ग्योहं ब्रवीमीत्यादावप्ययं निषेधः उत्तमपुरुषानुरोधेनाहमित्यस्यैव विशेष्यत्वादिति सर्वं सुरूढम् । सभाशब्दः शालायां संघाते च वर्त्तते तत्राद्ये प्रतिषेधादाह ( संघातार्थेति ( अशाला किमिति ) सूत्रमेव किमर्थमिति प्रश्नः । स्त्रीसभमित्यत्र सभेति योगविभागेनैव सिद्धेरित्याशयः ( धर्मसभेति ) उत्तरयोगं व्यर्थं सत्पुंस्त्वनपुंसकत्वान्यतरसमानाधिकरणाद्रव्यवाचकपूर्वपदस्य चेत्तर्हि राजादिपूर्वस्यैवेति नियमे स्त्रीसभमित्यादाविव धर्मसभेत्यत्रापि स्यात्, नियमानाक्रान्तत्वात् । किं च स्वांशे चारितार्थ्याभावेन राजादिपूर्वातिरिक्तत्वेन संकोचेपि पूर्वयोमेनोभयत्रापि स्यादित्यतः सूत्रमित्याशय इति मैथिलानां सम्प्रदायः ।

॥ इति तत्पुरुषः ॥ * * * * ॥

( स शेषः प्रथमान्तामिति ) न च प्रगत आचार्य्य इत्यादौ प्रादयो गताद्यर्थे इत्यनेन प्रथमान्तस्य समासविधानमिति वाच्यम्, प्रथमान्तेन समासविधानेपि प्रथमान्तस्य समासविधानाभावात् । ( अप्रथमा विभक्त्यर्थे बहुव्रीहिरिति ) अनेकप्रथमान्तस्य समासविधाने अन्यपदार्थपदेन प्रथमान्तार्थातिरिक्तस्यैव ग्रहणमुचितमिति समानाधिकरणानामिनि सामानाधिकरण्यमेकार्थबोधकत्वम् । अनेकप्रथमान्तस्थले अभेदान्वयप्रयोजकसमानविभक्तिकविशेष्यविशेषणवाचकपदयोः सत्त्वेन सामानाधिकरण्यमर्थंत उपपद्यत इति भावः । अनेकप्रथमान्तस्य फलमाह ( धृष्टे देवे गत इति ) प्रथमान्तमित्यस्य फलमाह पञ्चभिर्भुक्तमिति ( गङ्गाभार्य्य इति ) स्त्रीरूपार्थविशेषणवाचकस्य पुंरूपार्थातिदेशे गंगाशब्दस्य नित्यस्त्रीत्वार्थप्रतिपादकत्वेपि दोषः सुकरः । पुम्वदित्यस्य पुंवाचकस्येव रूपं स्यादित्यर्थस्तु न युक्तिकरः, भाषितपुंस्काद् ग्रहणवैयर्थ्यापत्तेः । केचित्तु पुंवाचकस्येव रूपं स्यादित्यर्थं मत्वा तत्समानार्थकधर्मद्रवादिशब्दसदृशरूपं स्यादिति वदन्ति । यः स्वकलाया प्रवृत्तेर्निमित्तं

कथ सकलाया वृद्धेर्निमित्तं यस्त्रयाणामाकारैकारौकाराणां निमित्त-
मिति भाष्यप्रामाण्येन वृद्धिशब्दावृत्त्या वृद्धिशब्देन या वृद्धिरिति
फलितम् (फलोपधानाभावादिति ) अन्यथा स्रौघ्नीभार्य्य इत्यत्र वृद्धि-
शब्देन विहिता या वृद्धिः सा चौकाररूपा तद्धेतुभूतो यस्तद्धितस्त-
त्स्वरूपयोग्यत्वं वैयाकरणभार्य्य इत्यत्राप्यणः सत्त्वेन निषेधापत्तेः ।
तथा हि निमित्तं द्विविधं फलोपहितं स्वरूपयोग्यं च, कार्य्याव्यवहित-
प्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्तित्वे सति कार्य्यसमानाधि-
करणात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपमाद्यम् । कार्य्य-
समानाधिकरणात्यन्ताभावीय-प्रतियोगितानवच्छेदकधर्मवत्त्वरूपम-
न्त्यम् । तथा च वृद्धिरूपकार्य्यसमानाधिकरणे प्रयोगे अणः अभावस्य
वक्तुमशक्यतया अन्याभावीयप्रतियोगितानवच्छेदकाणत्वधर्मवत्त्वस्यो-
भयत्र तुल्यत्वेपि कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणे
स्रौघ्नीत्यादिप्रयोगे वैयाकरणघटकाणः अभावेन न दोषः । अत्र च
मानम् परस्य प्रवाहणस्य न वृद्धिः पूर्वस्य तु वा इत्यर्थके प्रवाहणस्य ढे
इति सूत्रे प्रवाहणेयीभार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो न
प्राप्नोति । मा भूदेवं जातेश्चेति भविष्यतीति भाष्यमेव । वस्तुतः वृद्धेर्नि-
मित्तं यस्मिन्नित्यर्थाश्रयणपरभाष्यान्निषेधस्त्विष्ट एवेतीदं चिन्त्यमिति
दिक् । ( उपसर्गादनोत्पर इति) अनोत्परः किं प्रनो मुंचसम् तद्धंक्त्वेति
प्रणो नयेत्यत्र ओत्परत्वेपि णत्वदर्शनात् प्रनः पूषेत्यत्रानोत्परत्वेपि
णत्वादर्शनादव्याप्त्यतिव्याप्तिवारणाय अनोत्पर इत्यपनीय बहुल-
मिति भाष्ये कृतमिति भावः ( स्थानिद्वारेणायमिति ) यद्ययं समा-
सन्तो न स्यात्तदादेः परस्येत्यनेनादेः स्यात् । तथा च सति शैषिकः
कप् प्रसज्येत, समासान्तापत्तया शेषस्याश्रयणादिति भावः । ननु
लोपस्याभावरूपतयाऽवयवत्वाभावेन कथं समासान्तत्वव्यवहार इत्यत
आह ( स्थानिद्वारेणेति ) वचनबलादौपचारिकमवयवत्वमिति भावः
( इति बहुव्रीहिः ) ॥ * ॥ * ॥ * ॥

ननूद्भूतावयवभेदविवक्षया इतरेतरयोगद्वन्द्वे द्विवचनबहुवचनस्य
अनुद्भूतावयवभेदविवक्षया समाहारद्वन्द्वे समूहगतैकत्वेन एकवच-

नस्य चैतत्प्रकरणं विनापि सिद्ध्या एकवद्भावविधायकप्रकरणं व्यर्थम् इतरेतरयोगद्वन्द्वे एकवद्भावस्तु नेष्यते लक्ष्यानुरोधादिति चेन्न, एषां समाहार एवेति नियमार्थत्वात्, तेनोद्भूतावयवभेदविवक्षया एभ्यो बहुवचनं द्विवचनं च न, एषामेव समाहार इति विपरीतनियमस्तु न तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यमिति सूत्रे बहुवचनग्रहणात्। तद्धि समाहारद्वन्द्वे एकवचनस्य द्विवचनाभावाय क्रियते। विपरीतनियमे तु तत्र एकवचनानुत्पत्तौ बहुवचनस्यैव द्विवचने सिद्धे बहुवचनग्रहणस्य वैयर्थ्यं स्पष्टमेवेत्याशयेनाशंक्य समाधत्ते ( समाहारस्यैकत्वादित्यादिना ) ननूद्भूतावयवभेदविवक्षया इतरेतरयोगद्वन्द्वे द्विवचनादि-अनुद्भूतावयवभेदविवक्षया समाहारद्वन्द्वे एकवचनं चैतद्वचनं विनापि सिद्धं किमर्थमिदं सूत्रमित्याशंक्य समाधत्ते ( वैकल्पिकः समाहार इत्यादि ) इतरेतरयोग एवेति विरुद्धार्थानां चेदेकवचनद्वन्द्वस्तर्हि अद्रव्यवाचिनामेवेति शीतोष्णे उदके स्त इत्यत्र द्रव्यवाचित्वेनेतरेतरयोग एवेति भावः। भवत्येवेति विप्रतिषिद्धग्रहणाभावे सामान्यतःअद्रव्यवाचिनामेवेति नियमे द्रव्यवाचकयोरविरुद्धार्थयोर्न स्यादिति भावः। अनधिकरणवाचीति किं शीतोष्णे जले अशोभयापत्तिः स्यात् ( पुंऽन्यतरस्यामित्यस इति ) आनङ् ऋतो द्वन्द्वे इत्यस्य लक्ष्यानुरोधाद्दन्तानां द्वन्द्वे ऋदन्तस्य पूर्वस्यानङित्यर्थे पितापुत्रावित्यत्राप्राप्तेरतो मण्डूकानुवृत्त्या वाक्यभेदं चाश्रित्यात्रानङ्सिद्धिरिति भावः ( इति द्वन्द्वः ) ॥ * ॥

अग्रेग्रणशब्दस्याधिकरणशक्तिप्रधानत्वेपि अभितः सोर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति भाष्यात्प्रथमासिद्धिः।( विष्किरः शकुनाविति ) वृत्तिकारादीनाम्मते विष्किरः शकुनौ विकिरो वेति सूत्रपाठ इति स्वमतेनाशंकते ( वा वचनेनैवेति ) तस्यापीति विकिरशब्दस्यापीत्यर्थः ( भाष्यविरुद्धमिति ) इत्थं हि भाष्यम्-विष्किरः शकुनौ विकिरो वेति वक्तव्यम्, शकुनौ वा स्यादन्यत्र नित्यम्,तर्त्तर्हि वक्तव्यन्न वक्तव्यम् न वावचनेन शकुनिरभिसंबध्यते किन्तर्हि निपातनमभिसंबध्यते शकुनौ विष्किर इत्येतद्वा निपात्यते इति। अनेन स्पष्टमेव

पूर्वोक्तपाठस्य तच्छङ्कासमाधानयोश्च विरुद्धत्वम् किं च शकुनावेव विकिरशब्दप्रयोगो बहुषु दृश्यते । यथा विकिरं वैश्वदेविकम्, आगताद्विकिरं मासं विकिरेभ्यस्तनुन्ददावित्यादाविति दिक् ।
( इति समासाश्रयः ) ॥ * ॥ * ॥ *

( आदिवृद्धिरन्त्योपधावृद्धी बाधते इति ) अत्र, चानुशतिकादिगणे पुष्करसच्छब्दपाठो ज्ञापकः, अन्यथा पौष्करसादितिरित्यत्र उभय-
द्धा रूपसिद्धया पाठवैयर्थ्यं स्पष्टमेवेति॥ ननु तस्यापत्यमत इञित्ये-
योग एव,अदन्तेभ्य इञर्थमस्तु औपगव इत्यादाविदन्तत्वेनापत्ये बोध्ये
स्येदमित्यनेनैवाणि सिद्धे किमर्थो योगविभाग इति चेच्छृणु वृद्धसं-
कभान्वादिशब्दे वृद्धाच्छ इति बाधनार्थं योगविभाग इति।ननु वृद्धाच्छ
इति सूत्रे शेषाधिकारात् तस्यापत्यमत इञित्यत्रापत्यरूपार्थस्योक्ततया
शेषत्वाभावेन कथमपत्ये छप्राप्तिरिति चेत्सत्यम्, अदन्तादिप्रकृतिसं-
बद्धापत्यार्थस्योक्तत्वेपि उपग्वादिसम्बद्धापत्यार्थस्यानुक्तत्वेन उक्ता-
दन्यःशेष इति शेषपदार्थत्वं सुघटमेवेत्याशयेन व्याचष्टे (तस्येदमित्य-
पत्येपीति ) नन्वेकस्मिन् गोत्रेऽनेकप्रत्ययासक्तेः उक्तार्थानामिति
ङ्याप्प्रातिपदिकाधिकाराच्चेत्येको गोत्र इति सूत्रे व्यर्थमत आह
( गोत्रे स्वैकोनेति ) स्वं गोत्रन्तदपेक्षयैकोनसंख्यानम् "अपत्यं तोकं
तयोः समे" इति कोशात्पितुरेवापत्यमिति बोध्यम् । नःपतन्त्यनेने-
त्यपत्यमिति पङ्क्तिविंशतीतिसूत्रस्थभाष्यादपत्यं पौत्रप्रभृति गोत्रमिति
सूत्रानुगुण्याच्च पितामहादीनामप्यपत्यमिति बोध्यमतो मुख्योऽयम्पक्षः,
एवञ्च उपगुशब्दात् तृतीये वाच्ये इञाद्यापत्तिरिति औपगव इत्येक-
मिष्टन्ततः सर्वमनिष्टमिति शततमगोत्रे नवनवतिप्रत्यया अनिष्टाः स्युः
मुख्यपक्षे पुत्रे पौत्रे चौपगव इतीष्टं ततः सर्वमनिष्टमिति शततमे अष्टन-
वतिप्रत्यया अनिष्टाः स्युरिति सर्वं सुगममिति दिक् । ननु यथतोर्वि-
धानेपि यस्येतिलोपेनैव सिद्धे वामदेवाड्ड्यड्ड्याविति सूत्रे किमर्थं डि-
त्वमिति चेन्न,तद्व्यर्थं सञ्ज्ञापयति एकानुबंधकग्रहणे न द्व्यनुबंधकस्य
निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषाद्वयम् तेनावामदेव्य-
मित्यत्र ययतोश्चातदर्थ इति स्वरो नेति दिक् । ( इत्यपत्याधिकारः ),

॥ श्रीः ॥

# अथोत्तरार्द्धम्

कुमारान्तशिवं ध्यात्वा गुरुं गीर्वाणतोऽधिकम् ।
फक्किकामर्मविवृतेरुत्तरार्द्धो वितन्यते ॥ १ ॥

( वर्तमाने लडित्यादि ) सूत्रविहितलकाराणां द्योतकत्वं वाचकत्वं च वहुषु ग्रंथेषु विवादाध्यासितम् । तत्रास्मत्सिद्धान्ते द्योतकत्वमेव अनेकप्रत्ययानां वाचकतास्वीकारापेक्षया कतिपयप्रकृतेर्वाचकत्वकल्पने लाघवात् । शक्ततावच्छेदकत्वे गौरवात् । प्रत्ययार्थतया प्राधान्यापत्तेश्च, तच्च वर्तमानत्वं प्रयोगोच्चारणाधिकरणत्वे सति प्रारब्धापरिसमाप्तिक्रियाश्रयत्वरूपम् । ध्वस्तनीं प्रारब्धापरिसमाप्तिक्रियामादायातिव्याप्तिवारणार्थं सत्यन्तविशेषणमिति वहवः केचित्तु भूतभविष्यद्भिन्नत्वन्तत्त्वमिति वदन्ति, अत्रत्यविचारस्तु अन्यत्र निरूपित इति विस्तरभयान्नेहोपपादितः । नन्वनेकधातुसत्त्वे किमपराधेन भूधातोरेव प्रथमलेख इति शंकायां केचिदाहुः—अशोकवाटिकान्यायेन समुपात्तमिति । वस्तुतस्तु भूशब्दस्य महाव्याहृतिसमानरूपतया स्वरूपतो मंगलवाचकत्वान्माङ्गलिकेनाचार्य्येण अनायासेन मङ्गलसिद्ध्यर्थन्तदुपात्तमित्यास्तां तावत् ( परोक्षे लिडिति ) परोक्षत्वं च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम्, अत एव चक्रे सुवन्धुः व्यातने किरणावलीमुदयन इत्यादिप्रयोगाः प्रामादिका इत्याहुः । व्यासंगादिना परोक्षत्वोपपादनेपि वहुतरमनःप्रणिसंधानसाध्यशास्त्रार्थरचनात्मके ग्रन्थकरणे असंगत्यापत्तेरित्याहुः प्रामाणिकाः । अतीताया रात्रेः पश्चार्द्धेनागामिन्याः पूर्वार्धेन सहितो दिवसः अद्यतनस्तद्भिन्नोऽनद्यतन इति ॥ ( नित्यत्वाद्वुगिति ) गुणे वृद्धौ च स्थानिवत्त्वेन भूशब्दत्वात्कृताकृतप्रसङ्गित्वेन नित्यत्वमिति भावः । न च शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवतीति परिभाषाविरोध इति वाच्यम्,

लक्ष्यानुरोधादत्र कृताकृतप्रसंगित्वस्यैवाश्रयणात्। न च द्विर्वचनेऽची-
ति निषेधाद् गुणोदग्प्राप्तौ बुग्विधानसामर्थ्याच्च वुकि तदप्राप्तौ प्रकृ-
तग्रन्थासंगतिरिति वाच्यम् । सार्वधातुकार्द्धधातुकयोरिति गुणस्य
द्वित्वनिमित्तचक्षकाच्परत्वाभावनिमित्ततालकाजादेशाभावेन द्विर्वचनेऽची-
त्यस्याप्राप्तेरित्यभिमानेनेदमिति कश्चित् । ननु सार्वधातुकार्द्धधातु-
कयोरित्यस्याङ्गविशेषणत्वं तदव्यवहितपूर्वस्याङ्गस्येको गुणो भव-
तीत्यर्थे भिनत्तीत्यादावपि गुणः स्यात्, इको विशेषणत्वे भेत्त्यादा-
वपि गुणो न स्यादत आह ( येन नाव्यवधानमिति ) यत्कर्तृकव्य-
वधानशून्यसंभवाभावस्तद्व्यवधानेपि भवतीत्यर्थः । एवं च वचन-
सार्थक्याय वर्णैकव्यवधाने प्रवृत्तावपि अनेकवर्णव्यवधाने प्रवृत्ति-
र्नेति । अत्र च दीधीवेवीटामित्यत्रेड्ग्रहणमपि ज्ञापकं बोध्यम् । ननु
भवतादित्यत्र तातङादेशस्य ङित्त्वेन अनेकाल्त्वेपि आनङादाविव
बाधकेन ङिच्चेत्यनेनान्त्यस्य स्थाने प्रवृत्तिर्युक्तेति चेन्न, अनन्यफलक-
ङित्त्वे आनङादौ चरितार्थस्य ङिच्चेति शास्त्रस्य गुणवृद्धिप्रतिषेध-
संप्रसारणादिफलकतातङ्ङित्त्वे दुर्बल इव प्रवृत्तौ परेणानेकालित्यनेन
बाधात् । नहि आनङादौ ङित्त्वस्यान्त्यादेशादृते फलमस्ति । नहि च
यत्र कुत्रचित्सावकाशस्य विधिर्बाधकत्वं दृष्टमस्ति निरवकाशत्वरूपा-
पवादशास्त्रप्रवृत्तिप्रयोजकस्याभावात् । न च सति सर्वादेशे गुण-
वृद्धिप्रतिषेधसंप्रसारणाद्यर्थत्वम् । सति गुणवृद्धिप्रतिषेधसंप्रसार-
णाद्यर्थत्वे सर्वादेशत्वमित्यन्योन्याश्रयात्सर्वमिदमयुक्तमिति वाच्यम्,
परयोरित्यस्यानन्तरं तिह्योस्तादाशिष्यन्यतरस्यामिति न्यासे इकारानु-
वृत्त्या सिद्धे ङित्त्वस्य सर्वादेशत्वविधानार्थत्वकल्पनेनादोषादिति
भाष्ये स्पष्टमिति दिक् ॥ ( प्रपंचार्थमिति ) अत एव "अस्ति प्रवर्तना-
रूपमनुस्यूतं चतुर्ष्वपि। तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥
न्यायव्युत्पादनार्थं वा प्रपंचार्थमथापि वा । विध्यादीनामुपादानं
चतुर्णामादितः कृतमिति" संगच्छते, प्रवर्तनात्वं च प्रवृत्तिजनकज्ञान-
विषयतावच्छेदकधर्मवत्त्वम् ॥ तच्चेष्टसाधनत्वस्यास्तीति तदेव

विव्यर्थः ॥ ( ङित्त्वोक्तेरिति ) लिङो ङित्त्वस्य स्थानिवत्त्वेन तदादेशेऽपि सत्त्वात् आदेशे च ङित्त्वस्याचारितार्थ्यात्समुदायोपकारकत्वम् । एवं च सति यासुटो ङित्त्वेन न ल्यपीति ज्ञापितायां अनुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तेः चयाश्रितत्ववोधनात् । पिच्च ङिन्नेति भाष्याज्ज्ञापकत्वासंभवमाशंक्य श्नादेशस्येत्यादिना समाहितम् । अन्यत्तर्थे वक्ष्यमाणेत्यत्र स्पष्टीकृतमिति दिक् ॥ ननु सुटो विशेषविहितत्वेन येन नाप्राप्तिन्यायेन यासुटो बाधः कथन्नेत्यत आह ( सुटा यासुडिति विषयभेदादिति ) अत एवासंभवे एवापवादत्वमिति वार्त्तिकमतं संगच्छते । भाष्ये तु सत्यपि संभवे बाधनं भवतीति यथा दधिदानोत्तरं तक्रदानस्य चारितार्थ्येऽपि तक्रदानेन दधिदानबाध इत्युक्तम् । अत एवाविरादेशेन नुटो बाधमाशंक्य न तिस्रेति ज्ञापकेन समाहितं भाष्ये । एवं च प्रकृते का गतिरिति चेच्छृणु यासुट् परस्मैपदेष्वित्यत्र परस्मैपदेष्विति विषयसप्तमी तेन परस्मैपदविषयतायामेव लिङो यासुड्विधानम् । तस्मिश्च समये सुटः प्राप्तिरेव नेति कथं बाध्यबाधकभावः । अत एव लिङो यासुट् तकारथकारयोः सुडिति मूल उक्तम् । विषयभेदादित्यस्य प्राप्तिविषयभेदात्, प्राप्तिकालभेदादिति फलितार्थः । वस्तुतो यासुड्विषये सीयुटः प्रतिषेधो वक्तव्य इति वार्तिकेनात्र विषये बाध्यबाधकभावाभावकल्पनात् । केचित्तु विषयभेदादित्यस्य यौगपद्यासंभवरूपविप्रतिषेधाभावान्न परत्वेन बाध इत्याशयं वदन्ति ( सकारद्वयस्यापीति ) लक्ष्यभेदान्न लक्ष्ये लक्षणान्यायविषय इति भावः । असो येय इति सूत्रे सार्वधातुकानुवृत्तिः किमर्था इत्याशंक्य समाधत्ते ( चिकीर्ष्यादिति ) अयं भावः भवेदित्यत्रातो दीर्घो यञीति दीर्घः प्राप्तः चिकीर्ष्यादित्यत्र अतो लोप इति लोपः प्राप्तः।एवं च इयादेशप्राप्तिविषयस्य बहुभिराक्रान्ततयाऽपवादत्वम्,तत्र किं बाधेन चारितार्थ्यमित्यपेक्षायां मध्ये अपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति न्यायेन अतोलोपबाधेन् चारितार्थ्ये दीर्घबाधे मानाभावेन परत्वाद्दीर्घः स्यादिति सार्वधातुकग्रहणमिति फले चास्मिन् चिकीर्ष्या-

दित्यत्रेयादेशप्राप्तौ उक्तन्यायविषयाभावेन दीर्घबाधनेनैव चारितार्थ्य-
मिति तत्त्वम्। ननु संहिताविवक्षाऽविवक्षाभ्यां रूपद्वयसिद्धौ विभाषा-
ग्रहणं व्यर्थमत आह(इहोपसर्गाणामित्यादि)संहितैकपदे इति अत्र पद-
शब्देन खंडपदं गृह्यते अत एव नित्या समास इति चरितार्थम्(तदर्थयो-
रभेदान्वय इति ) सामान्यविशेषयोर्घटो नीलघट इत्यादौ विधेयांशे
अधिकावगाहिनः शाब्दबोधस्य नवीनमते स्वीकारात्। एवं च एधां-
चक्रे इत्यादित एककर्तृका भूतानद्यतनपरोक्षकालिकवृद्ध्यभिन्ना क्रिया
इत्यादि बोध इति (उपदेश इत्युभयान्वयीति)देहलीदीपन्यायात् काका-
क्षिन्यायाद्वेति भावः।एकाचि च तदसंबन्धे बिभित्सती सन्नन्ते निषेधो
न, स्यात् अनुदात्ते च तदसंबन्धे कर्तुं हर्तुमिति तुमुनन्ते णिग्नित्या-
देर्नित्यमित्याद्युदात्तत्वे इडागमापत्तेः। अतो लक्ष्यानुरोधादपि प्रत्येकं
संबन्ध इति बोध्यम्।(एकाचः किमिति)नत्वेतदभावे जंघनितेति यङ्लु-
गन्ते निषेधः स्यादिति चेत्सत्यम्,कृतेप्येकाच्ग्रहणे उपदेशएकाच्त्व-
सत्त्वेन निषेधस्य दुर्वारत्वात्। एवं च व्यर्थमेकाच्ग्रहणं श्तिपाशपेति
निषेधं ज्ञापयति स्थालीपुलाकन्यायात्। न च श्युकः किताीति सूत्रे-
ऽनुवृत्त्यर्थमेकाच्ग्रहणमिति वाच्यम्, लक्ष्यानुसारादेवोक्तनिषेध-
ज्ञापनादिति प्रांचः । नवीनास्तु उत्तरार्थमेकाज्ग्रहणमिति वदता
भाष्यकारेण अत्र सूत्रे अनावश्यकत्वं ध्वनितम्। न चोत्तरार्थस्यापि
इह किंचित्रपो इति भाष्येणोहकरणस्य सफलत्वमिति वाच्यम्, इह
स वध्यर्थमिति भाष्यकारेणैवोक्तत्वात्। न च वधादेशो हन्तिरूप
उपदेशे एकाजेवेति वाच्यम्, साक्षादुपदेशसंभवे स्थान्युपदेशग्रहणे
मानाभावात्। न चोक्तनिषेधाश्विना यङ्लुकि कथं तत्तत्कार्यप्रवृत्ति-
रिति वाच्यम्, यङ्लुकश्छान्दसत्वेन छन्दसि दृष्टस्यैवानुविधानात्,
चर्करीतं चेत्यदादौ पाठाच्चेति दिक्। ननु अच इत्यत्र ज्ञस्गतैकत्वस्य
अनयोः पूलयोः कटं कुर्वित्यादाविव विवक्षणादेकत्वस्य संख्यात्वेन
विशेषणत्वाल्लक्ष्यानुरोधान्मत्वर्थलक्षणया एकाच्वतो ग्रहणेन च
सिद्धे एकग्रहणं व्यर्थमिति चेन्न, उपदेशत्वावच्छेदेनैकाचो ग्रहण-

मिति बोधनेन सार्थकयात् । तेनाबधीदित्यादौ निषेधो न, स्थान्युपदेश एकाच्त्वेऽपि आदेशोपदेशे अनेकाच्त्वात् । न च अर्द्धन्नपुंसकामिति नपुंसकग्रहणेन आकडारादिति सूत्रे एकाग्रहणेन च सूत्रे लिङ्गवचनमतंत्रमिति ज्ञापनेन कथं प्रकृते निर्वाह इति वाच्यम्, साक्षादुपदेशग्रहणेन चारितार्थ्ये स्थान्युपदेशग्रहणे मानाभावादिति दिक् ॥ ननु ऊखतुरित्यत्र पूर्वं सवर्णदीर्घे पूर्वान्तवद्भावेनाभ्यासत्वाद्ध्रस्व इत्यनेन ह्रस्वः कुतो नेति चेन्न, अन्तरङ्गस्यापि दीर्घस्य वार्णादाङ्गं बलीय इति परिभाषया पूर्वं ह्रस्वे ततो दीर्घे लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्व इत्यदोषात् । न च पिष्टपेषणवत् ह्रस्वस्य ह्रस्वविधानं व्यर्थमिति वाच्यम्, पर्जन्यवल्लक्षणप्रवृत्तिरिति सिद्धान्तादङ्गवयवाभ्यासे विधीयमानह्रस्वस्य फलाभावेपि प्रवृत्तेर्दुर्वारत्वात् । न च स्योन इति भाष्योदाहरणेन वार्णादाङ्गमिति परिभाषाया अनित्यत्वावश्यकत्वेनात्राप्रवृत्तौ द्वित्वनिमित्तकाभ्यासनिमित्तकबहिरङ्गह्रस्वापेक्षया अन्तरङ्गदीर्घस्यैव प्रवृत्तिरिति वाच्यम्, षत्वतुकोरसिद्ध इति सूत्रे तुग्ग्रहणादन्तरङ्गपरिभाषाया अप्यनित्यत्वेन परत्वाद्ध्रस्वस्यैव प्रवृत्तेरिति दीक्षिताशयः । वस्तुतस्तु अभ्यासविकारे बाध्यबाधकभावो नास्तीति परिभाषया ह्रस्वदीर्घयोर्युगपत्प्राप्तौ लक्ष्ये लक्षणन्यायेन न पुनर्ह्रस्वः उक्तपरिभाषाया यथानिवेशस्तथा कर्तव्य इत्यर्थाद्ध्रस्वदीर्घयोर्युगपत्प्राप्तिरिति बोध्यम् । केचित्तु उक्तपरिभाषया ह्रस्वहलादिशेषयोः समावेशे लक्ष्ये लक्षणन्यायेन न पुनर्ह्रस्व इत्याहुः । ननु कृसृभृवृपां प्रकृत्याश्रय एकाजिति निषेधः सिद्धः, वृधातोश्च प्रत्ययाश्रयश्च्युकःकितीति निषेधः सिद्धः, इति किमर्थमत्र सूत्रे एषां ग्रहणम्, स्तुद्रु-आदिग्रहणन्तु भारद्वाजनियमप्रापितइनिषेधाय सार्थकमित्याशयेनाह ( कादीनां चतुर्णामिति ) प्रकृत्याश्रयत्वं च अव्यवहितोत्तरत्वसंबन्धानवच्छिन्नधातुत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकप्रत्ययघटितदारूत्वम् । भाष्यसिद्धान्ते एकाचो विहितेत्यर्थे अव्यवहितोत्तरत्वसंबन्धानवच्छिन्नत्वं बोध्यम् । यावानिति नण्वाशब्दान्यतरप्रापित

इत्यर्थः, तेन षिधू इत्यस्य सिषेधिथेत्येकमेव । यत्तु अनन्तरस्येति न्यायेन प्रक्रमाद्वा नञ्प्रापितस्यैव नियमस्तेन षिधू इत्यस्योभयमिति तन्न उपदेशेऽत्वत इति सूत्रे भाष्ये नित्यानिट इत्यस्याजिव्यावर्त्य इत्युक्तम् । यदि च वाप्राप्तनियमो न स्यात्तदा तत्राप्यूदि-रप्रयुक्तविकल्पस्य सत्त्वेन तदसंगतिः स्पष्टैव । मम तु क्रादिनियमेन नित्य इडिति भावः,नान्येभ्य इति तेन बभूविवेत्यादि सिद्धम् । स्यादे-तत् अस्तु प्रकृत्याश्रयस्य नियमः प्रत्ययाश्रयस्य तु न प्राप्तिः, वचर्थे-त्यत्राप्राप्तनिषेधप्रापकत्वात्,नह्यत्र प्रत्ययाश्रयः वृञ उदात्तत्वात् वृङस्तु न विशिष्यग्रहणम्, अप्राप्तनिषेधप्राप्तिफलकत्वेन वृञ एव ग्रहणं भवेत् विधिनियमयोर्विधिरेव ज्यायान् । एवं च बभूविवेत्यत्र श्र्युकः क्किती-तीड्निषेधो दुर्वार इति चेदत्राहुः बभूथाततन्थेति सूत्रे छन्दसि ववर्थेति निपातनाद् भाषायां वृञस्थले इटः स्वीकर्तव्यत्वाद्, वृञ्ग्रहणस्य थल्-विषयत्वायोगाद्रूपादीनां च कित्त्वेन नियमस्य सुस्थत्वादिति दिक् । ( संज्ञायाः कार्यकालत्वादिति ) अयं भावः । संज्ञाशास्त्राणां कार्य्य-कालपक्षे पृथक्वाक्यार्थबोधाभावेन एकाजित्यनुवृत्तिसहितस्य पूर्वो-भ्यास इत्यस्य सन्वल्लघुनि दीर्घोलघोरिति सूत्रद्वये सन्निधानम् अङ्गवत्तत्र संनिहितम्, उच्चारणेति कृदन्तमध्याहृतम्, तद्योगादङ्ग-[illegible] कर्मणि षष्ठी कारकविभक्तेर्न्याय्यत्वात् । एकाच इति च तत्समानाधिकरणं विशेषणम्, द्वे इति च विशेष्यसमर्पकम् । एवं चाङ्गसंज्ञकाभिन्नैकाच्कर्मके ये द्वे उच्चारणे तयोः पूर्वाभ्याससंज्ञ-स्नस्य च सन्वद्भावदीर्घावित्यर्थः । एवं च एकाच्त्वेवानयोः प्रवृत्तिः स्यादिति इदं चाजजागरदित्यादौ सन्वद्भावापादनपरभाष्यविरुद्धमत आह ( वस्तुत इति, ऊर्णौ दीर्घ इति ) तेन और्णूनवदिति सिद्धम् । अर्थापयताविति तेनार्थार्थपदिति सिद्धम् । चकास्ताविति तेनाची-चकासत्, अचचकासदिति सिद्धम् न स्यादिति चङ्परकलघोर-भावादिति भावः । स्यादिति अभ्यासस्य लघुपरत्वेन विशेषणादिति भावः । ननु कथमुभयार्थलाभ इत्यत आह णाविंशेष्यामिति अत्र प्रमा-

गामाह इति व्याख्येति अन्यत्सर्वं सुगमामिति दिक् । ( घटादिगणे ) ये अन्यधिकरणा अनूद्यन्ते तेषां तत्तत्प्रयुक्ता एव विकरणाः । ये तु प्रसिद्धया पचानूद्यन्ते स्वतंत्रा वा पठ्यन्ते तेषां शवेव तेषु च ये अन्यत्राधीता इह पठ्यन्ते तेषामर्थनियमः । ये त्विहैव पठ्यन्ते तेषामुपसर्गाद्विना अर्थान्तरपरत्वेऽपि सिद्धमस्त्येवेति बोध्यम्, यस्थानिकहलादिः शेषस्येति न चाभ्यासविकारे बाध्यबाधकभावाभावादिदमयुक्तमेवं च वस्यैव संप्रसारणापत्तिरिति वाच्यम्, लिट्यभ्यासस्येति सूत्रे उभयेषां ग्रहणेन सामान्यत एवाभ्यासलोपाभ्याससंप्रसारणविषये तन्न्यायाप्रवृत्तेर्ज्ञापनेनादोषात् । संप्रसारणं तदाश्रयं च कार्य्यं बलवदिति तु उभयेषां ग्रहणवैयर्थ्यापत्त्या लिट्यभ्यासस्येति सूत्रे एव भाष्ये प्रत्याख्यातमिति तदुपन्यासः केषांचिदयुक्त एवेति दिक् । तन्नोति मावव इति सूत्रे दीर्घान्तपाठ एव सर्वसम्मतः घटादावपि दीर्घान्ता एव सर्वैः पठ्यन्ते यद्ययं ह्रस्वान्तो भवेत्तर्हि शॄदॄप्रां ह्रस्वो वेति सूत्रे दग्रहणं व्यर्थं स्यात् । धातुद्वयेन दद्रतुः ददरतुरिति रूपद्वयसिद्धेः । न च दविदारणे इत्यस्य रूपद्वयलाभार्थं दग्रहणमावश्यकमिति वाच्यम्, धातूनामनेकार्थत्वात्समीहितसिद्धेरिति माधवाशयः । ( फले तु न भेद इति ) न च गा अ आतामिति स्थिते धातोदाङ्परिभाषया दीर्घात्पूर्वमेव आतो ङित इत्यस्य प्राप्त्या फलभेदः स्पष्ट एवेति वाच्यम्, स्योन इति भाष्योदाहरणेनोक्तपरिभाषाया अनित्यत्वात् । न च गाधातोः शानचि आने मुगिति मुका फलभेद इति वाच्यम्, वार्णाशास्त्रीयस्थानितासमानाधिकरणस्थानिताकत्वरूपसमानकार्यत्वे एव वार्णपरिभाषाप्रवृत्तिस्वीकारादिति दिक् । ( प्रणिमयते इति ) नन्विह नेर्गदेति णत्वं दुर्लभं शिद्विषये आत्त्वाभावेन मारूपत्वाभावात् । किं च अशिद्विषये आत्त्वेऽपि तत्र णत्वं दुर्लभं लाक्षणिकत्वात् । न च मामादाग्रहणेष्वविशेष इति वाच्यम्, मीनाति मिनोतीत्यादिना कृतात्वयोरपि ग्रहणापत्तेरत आह ( तत्र घुप्रकृतिरित्यादि ) घुश्च प्रकृतिश्च माङ् चेति द्वन्द्वः प्रकृतिश्च

कस्येत्याकांक्षायां सन्निधानात्पूर्वोत्तरयोरेवेति दाधाघ्वदिति सूत्रे भाष्ये सिद्धान्तितम्। एवं च प्रणिदयते इत्यादाविव प्रणिमयते इत्यत्रापि सिद्धिरिति विचारणीयमन्यत्। इति भ्वादयः॥ * ॥

(नमःख्यात्रे इति) नमःख्यात्रे, इत्यत्र सस्थानत्वं वक्तव्यम्, अन्यथा शर्परे विसर्जनीय इत्यनेन विसर्गः स्यादिति वार्तिकाशयः। यद्ययमार्द्धधातुकेपि प्रयुज्यते तदा तृजन्ते अस्मिन् शर्परे विसर्जनीय इत्यस्याप्राप्तौ भाष्यवार्तिकासंगतिः स्पष्टैवेति। न च कुप्वोरित्यस्य विसर्जनीयस्य स इत्यस्यापवादत्वमजानतो वार्तिककारस्येयमुक्तिरिति वाच्यम्, ख्याञादेशस्य खशादित्वप्रयोजनगणनावसर एव तदुक्तेरिति स्वयमूहनीयम्। (संपूर्वस्य ख्यातेरिति) तन्मते संख्येति प्रयोगस्तु ख्याञादेशस्येति बोध्यम्। अन्यत्सर्वं सुगममिति नेह प्रपंचितं विस्तरभयात् ॥ ननु न धातोर्णिचि चङि नशब्दस्येटं द्वित्वं दुर्लभम् द्वित्वात्पूर्वमेव अन्तरङ्गत्वादल्लोपप्रवृत्तेः 'द्विर्वचनेचीति निषेधस्तु नाशंक्यः' णिचो द्वित्वनिमित्तत्वाभावादत आह (ओः पु यण्जीति) विभावयिषति अबीभवदित्यादौ, अन्तरङ्गत्वाद् वृद्धावावादेशे च सन्यत इत्त्वेनैव सिद्धेः पूङो यौतेश्च सनि स्मिपूङरञ्ज्वशां सनि सनीवन्तर्द्धभ्रस्जदम्भेत्यादि नेटि द्वित्वनिमित्तसत्त्वेन द्विर्वचनेचीत्यस्य प्रवृत्त्या पूर्वं गुणाभावे अभ्यासे उकारसत्त्वेन पिपविषति पिपविषतीत्यत्र इत्त्वविधानार्थं पयोरिति वाच्यम् वर्गादिग्रहणं व्यर्थं सत् णिचो द्वित्वनिमित्तत्वाभावेपि तन्निमित्तकाजादेशस्य द्वित्वे कर्तव्ये निषेधं ज्ञापयतीति प्रकृते लोपात्पूर्वमेव द्वित्वे अभ्यासे अकारश्रवणमिति भावः। नन्वेवमचिकीर्तदित्यत्र पूर्वमुपधायाश्चेतीत्वमपि न स्यादत आह ( यत्र द्विरुक्ताविति ) अयं भावः ज्ञापकसाजात्याद्यत्र द्वित्वे अभ्यासोत्तरखंडस्याद्यच्प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णो लभ्यते तत्रैवोक्तनिषेध इति। अचिकीर्तदित्यत्र तु प्रक्रियायां परिनिष्ठिते वा अभ्यासोत्तरखंडस्याद्यचो अवर्णरूपत्वाभावादिति संक्षेपः। ( परत्वाद् वृद्धौ सत्यां टिलोप इति) पूर्वं वृद्धौ सत्यामनग्लोपित्वाद् द्वित्वादिसिद्धिरित्यपीपटदिति सिद्धम्।

अत एव हलिकल्योरदन्तत्वनिपातनं संगच्छते । पूर्वं लोपे तु इकार-लोपेऽप्यग्लोपित्वसत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति । इदमेवात्र ज्ञापकमिति बोध्यम् । आवादेशात्पूर्वमेवान्तरङ्गत्वाल्लोपे अनग्लोपित्वात्सन्वत्त्वं भवत्येवेति भावः । ( लोपो बलीयानिति ) अत एव नाग्लोपीत्यत्र प्रत्याहारग्रहणं चरितार्थम् । हलकलयोरदन्तस्यैव सूत्रे पाठः । हलि-कलिभ्यां णिजेव नास्ति । लुङ्येव वानयोरनभिधानमेतद्भाष्यप्रामाण्यात् । अन्यत्सर्वं सुगममिति दिक् ॥ ( इति चुरादयः ) ॥ * ॥

( अचीचकासदिति ) । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर इत्यर्थे सन्वद्भावादयः । ( मतान्तर इति ) भाष्यसिद्धमते चङ्परे णौ यल्लघु इत्याद्यर्थे सन्वद्भावाभावः ॥ ( णयाकृतीति ) । एवञ्च णित्वजात्याश्रयानेकणिचो ग्रहणेनादोषात् । न च वर्णग्रहणे एव जातिनिर्देशस्य भाष्यसिद्धतया इदमयुक्तमिति वाच्यम्, ते प्राग्धातोरित्यत्र गत्याद्याकृतिनिर्देशस्य सम्मतत्वात् वृत्तिमते अन्यथा-प्याश्रयणाच्च । वस्तुतस्तु जातेः पौर्वापर्यव्यवहाराभावेन दोषस्य तादवस्थ्यात् । अत एव जात्या पौर्वापर्यव्यहाराभावमाशङ्क्य आर्द्ध-धातुक इति विषयसप्तमीति भाष्येण व्यक्तिद्वारकपौर्वापर्यस्याप्यनाश्रयणात् । किञ्च णिनिमित्तकणिलोपस्यापि णित्वजातिनिमित्तकत्वे-नाग्लोपित्वं दुर्वारमेवञ्च अवीवददिति भाष्येण णेर्णिच्युपसंख्यान-मिति चङीतिसूत्रस्थवार्त्तिकेन चोक्तप्रयोगः साधुरिति दिक् ॥ नन्व-न्तरङ्गत्वाद् वृद्ध्यायोः कृत्योः पश्चात्सम्प्रसारणेऽप्यशूशवदिति न स्यादत आह ( सम्प्रसारणमित्यादि ) णिच्यजादेशो न स्यादिति तु नाशङ्कनीयमशूशवदिति भाष्यप्रयोगेणोक्तज्ञापनस्यानित्यत्वात् सूत्रवैयर्थ्यादिति तु न समाधानं ङित्वे कृतेपि चारितार्थ्यादिति केचित् । ( ऋदित्करणादिति ) ॥ अन्यथा पूर्वं णिशब्दस्य ङित्वे उप धात्वाभावेन ह्रस्वत्वाप्राप्तौ किन्निषेधार्थतत्करणेनेति भावः ॥ ( कथ-न्तर्हीति ) आत्ववदात्मनेपदविधानस्यावश्यकत्वेन तत्त्यागे मानाभाव

इति प्रश्नः। उभौ यकारावेवेति समाधानं वहुपुस्तकसम्मतपाठे आह ( यद्वेति ) एवञ्च णयन्तात्सणि आत्मनेपदन्दुर्लभं भीस्मिप्रकृति-कणयन्तादेव तद्विधानात् ( ईर्ष्यतेस्तृतीयस्येति ) वार्तिकस्य तृतीय-व्यञ्जनस्येति व्याख्याने फलमाह। ( पेर्ष्यियदिति ) नन्वेवमैर्ष्यिष्य-दित्यस्यासाधुत्वं स्यादत आह(द्वितीयव्याख्यायामिति) ईर्ष्यतिप्रकृतिक-प्रत्यायान्तधातोरित्यर्थे णयन्तसन्नन्तयोश्च विनिगमनाविरहात्प्रवृत्तिः॥ ( तृतीयस्येति ) तृतीयव्यन्जनाङ्गविशिष्टस्येत्यर्थः। नन्वर्थधातोराग-र्वीयत्वादात्मनेपदेन भाव्यमिति प्रार्थयन्तीति कथं प्रयोग इत्यत आह ( निवृत्तप्रेपणेति ) ॥ इति णयन्तप्रक्रिया ॥ * ॥

इच्छाया नियतकर्माकांक्षतया प्रत्यासत्त्या प्रकृत्यर्थकर्मिकायामेव वि-धानं स्यादित्याशयेन शंकते (कर्मणः किमिति)प्रत्यासत्तिस्सर्वैर्दुर्विज्ञेये-ति भावः॥ (आदेशनिषेधाद्वेति) उभयपक्षस्य भाष्यासिद्धत्वेपि स्थानिरू-पातिदेशपक्षेनोशब्देन वशब्दे वानुशब्दबुद्ध्या कार्यप्रवृत्तावपि मूलोक्त-दोषस्य तादवस्थ्यात्। अत एव भाष्ये मूले च निषेधपक्ष एव सिद्धा-न्तितः॥इत्यन्यत्सर्वं सुगमम्॥(प्रकृतिप्रत्ययापत्तिवचनाद् वेति)॥पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधनाय पुष्ययोगे भ्मीतिसूत्रे भाष्यकृता प्रकृतिप्रत्ययापत्तेरनुवृत्तिः कृता अन्यथा कुल्लोपे चजोः कुरिति विहित-कुत्वस्योक्तपरिभाषयैव निवृत्तौ तद्वैयर्थ्यं स्पष्टमेवेति। किञ्च आख्या-नात्कृतस्तदाचष्टे इत्यादिवार्तिकविहितप्रकृतिप्रत्ययापत्तिवचनेनानि-त्यत्वं बोध्यम्॥ वस्तुत एतज्ज्ञापकैस्तत्परिभाषाऽभावज्ञापनस्यैव युक्त-त्वादिति दिक्॥ ( इति सन्नन्तः )।

( छन्दसि निपातनादिति ) यङ्लुगन्तभूधातोश्छन्दस्येव तत्रापि लोट्येव गुणाभाव इति नियमः। अत एव भाष्ये बोभूत्विति नियमा-र्थमत्रैव यङ्लुगन्तस्य गुणाभावो नान्यत्र बोभवतीतीत्युक्तम्॥ ( अत एवेति ) पूर्वोक्तनियमादेवेत्यर्थः॥ ( अप्राप्त एवेति ) ॥ समुदायस्य भूत्वाभावादिति भावः॥ प्रकृतिग्रहणे इत्यत्र मानमाह(द्विप्रयोग इति) वस्तुत इदञ्चिन्त्यं भूसुवोरित्यस्य सदन्ताङ्गस्येत्यर्थेन निषेधप्राप्तया

अत एव हलिकल्योरदन्तत्वनिपातनं संगच्छते । पूर्वं लोपे तु इकार-लोपेऽप्यग्लोपित्वसत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति । इदमेवात्र ज्ञापकमिति बोध्यम् । आयादेशात्पूर्वमेवान्तरङ्गत्वाल्लोपे अनग्लोपित्वात्सन्वत्त्वं भवत्येवेति भावः । ( लोपो बलीयानिति ) अत एव नाग्लोपीत्यत्र प्रत्याहारग्रहणं चरितार्थम् । हलकलयोरदन्तस्यैव सूत्रे पाठः । हलि-कालिभ्यां णिजेव नास्ति । लुङ्येव वानयोरनभिधानमेतद्भाष्यप्रामा-ण्यात् । अन्यत्सर्वं सुगममिति दिक् ॥ ( इति चुरादयः ) ॥ * ॥

( अचीचकासदिति ) । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर इत्यर्थे सन्वद्भावादयः । ( मतान्तर इति ) भाष्यसिद्धमते चङ्परे णौ यल्लघु इत्याद्यर्थे सन्वद्भावाभावः ॥ ( यथाकृतीति ) । एवञ्च णित्त्वजात्याश्रयानेकणिचो ग्रहणेनादोषात् । न च वर्णग्रहणे एव जातिनिर्देशस्य भाष्यसिद्धतया इदमयुक्तमिति वाच्यम्, ते प्राग्धातोरित्यत्र गत्याद्याकृतिनिर्देशस्य सम्मतत्वात् वृत्तिमते अन्यथा-प्याश्रयणाच्च । वस्तुतस्तु जातेः पौर्वापर्यव्यवहाराभावेन दोषस्य तादवस्थ्यात् । अत एव जात्या पौर्वापर्यव्यहाराभावमाशंक्य आर्द्ध-धातुक इति विषयसप्तमीति भाष्येण व्यक्तिद्वारकपौर्वापर्यस्याप्यना-श्रयणात् । किञ्च णिनिमित्तकणिलोपस्यापि णित्त्वजातिनिमित्तकत्वे-नाग्लोपित्वं दुर्वारमेवञ्च अवीवददिति भाष्येण णेर्णिच्युपसंख्यान-मिति चङीतिसूत्रस्थवार्त्तिकेन चोक्तप्रयोगः साधुरिति दिक् ॥ नन्व-न्तरङ्गत्वाद् वृद्ध्यायोः कृत्योः पश्चात्संप्रसारणेऽप्यशूशवदिति न स्यादत आह ( सम्प्रसारणमित्यादि ) णिच्यजादेशो न स्यादिति तु नाशङ्कनीयमशूशवदिति भाष्यप्रयोगेणोक्तज्ञापनस्यानित्यत्वात् सूत्रवैयर्थ्यादिति तु न समाधानं द्वित्वे कृतेपि चारितार्थ्यादिति केचित् । ( ऋदित्करणादिति ) ॥ अन्यथा पूर्वं णिशब्दस्य द्वित्वे उप धात्वाभावेन ह्रस्वत्वाप्राप्तौ किन्निषेधार्थतत्करणेनेति भावः ॥ ( कथ-न्तर्हीति ) अत्वयदात्मनेपदविधानस्यावश्यकत्वेन तत्त्यागे मानाभाव

इति प्रश्नः। उभौ यकारावेवेति समाधानं वहुपुस्तकसम्मतपाठे आह (यद्वेति ) एवञ्च यण्यन्तारिणाचि आत्मनेपदन्दुर्लभं भीस्मिप्रकृतिकण्यन्तादेव तद्विधानात् ( ईर्ष्यतेस्तृतीयस्येति ) वार्तिकस्य तृतीयव्यञ्जनस्येति व्याख्याने फलमाह। ( येर्ष्ययिदिति ) नन्वेवमैर्ष्यिष्यदित्यस्यासाधुत्वं स्यादत आह(द्वितीयव्याख्यायामति) ईर्ष्यतिप्रकृतिकप्रत्यायान्तधातोरित्यर्थे ण्यन्तसन्नन्तयोश्च विनिगमनाविरहात्प्रवृत्तिः॥ ( तृतीयस्येति ) तृतीयव्यन्जनाङ्गविशिष्टस्येत्यर्थः। नन्वर्थधातोरागर्वीयत्वादात्मनेपदेन भाव्यमिति प्रार्थयन्तीति कथं प्रयोग इत्यत आह ( निवृत्तप्रेषणेति ) ॥ इति ण्यन्तप्राक्रिया ॥ * ॥

इच्छाया नियतकर्माकांक्षतया प्रत्यासत्त्या प्रकृत्यर्थकर्मिकायामेव विधानं स्यादित्याशयेन शंकते (कर्मणः किमिति)प्रत्यासत्तिस्सर्वैर्दुर्विज्ञेयेति भावः॥ (आदेशनिषेधाद्वेति) उभयपक्षस्य भाष्यासिद्धत्वेपि स्थानिरूपांतिदेशपक्षेनोशब्देन वशब्दे वानुशब्दवुद्ध्या कार्यप्रवृत्तावपि मूलोक्तदोषस्य तादवस्थ्यात्। अत एव भाष्ये मूले च निषेधपक्ष एव सिद्धान्तितः।इत्यन्यत्सर्वं सुगमम्॥(प्रकृतिप्रत्ययापत्तिवचनाद् वेति)॥पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधनाय पुष्ययोगे ज्ञीतिसूत्रे भाष्यकृता प्रकृतिप्रत्ययापत्तेरनुवृत्तिः कृता अन्यथा कुल्लोपे चजोः कुरिति विहितकुत्वस्योक्तपरिभाषयैव निवृत्तौ तद्वैयर्थ्यं स्पष्टमेवेति। किञ्च आख्यानात्कृतस्तदाचष्टे इत्यादिवार्तिकविहितप्रकृतिप्रत्ययापत्तिवचनेनानित्यत्वं बोध्यम्॥ वस्तुत एतज्ज्ञापकैस्तत्परिभाषाऽभावज्ञापनस्यैव युक्तत्वादिति दिक्॥ ( इति सन्नन्तः )।

( छन्दसि निपातनादिति ) यङ्लुगन्तभूधातोश्छन्दस्येव तत्रापि लोट्येव गुणाभाव इति नियमः। अत एव भाष्ये बोभूत्विति नियमार्थमत्रैव यङ्लुगन्तस्य गुणाभावो नान्यत्र बोभवतीतीत्युक्तम्॥ ( अत एवेति ) पूर्वोक्तनियमादेवेत्यर्थः॥ ( अप्राप्त एवेति ) ॥ समुदायस्य भूत्वाभावादिति भावः॥ प्रकृतिग्रहणे इत्यत्र मानमाह(द्विप्रयोग इति) वस्तुत इदञ्चिन्त्यं भूसुधोरित्यस्य सदन्ताङ्गस्येत्यर्थेन निषेधप्राप्तया

नियमसंभवात् । अत एव अस्तेर्भू-आदेशे स्थाने द्विर्वचनपक्षे सर्वादेशो भूभावः प्राप्नोति, अथ द्विःप्रयोगो द्विर्वचनं तदा परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोतीति भाष्ये उक्तमिति दिक् ॥ ( सामान्यापेक्षज्ञापकत्वादिति ) ॥ एकाचो द्वित्वं विधीयते तत्र च शितपाशपेति निषेधादभ्यासत्वाभावेन विधानवैयर्थ्यं स्पष्टमेवेति भावः ॥ ( द्वित्वघ्नेति ) ॥ कृतद्विर्वचनस्य वधादेशे पुनर्द्वित्वाभावे हेतुमाह ( स्थानिवत्त्वेनेति) अस्तेरिति सूत्रस्थभाष्येण उत्तरखण्डस्यैव वधादेशे जघ्ध्यादित्येवेति बोध्यम । ( भाष्ये ध्वनितमिति ) तथाहि च्छ्वोरिति सूत्रे क्ङितीत्यनुवर्तते नवेत्याशङ्क्य तत्र दोषानुद्भाव्य परिहृत्य चोक्तम । एतावानेव विशेषः अनुवृत्तौ अक्ष्यादिसूत्रे प्रष्ठेत्याद्यर्थं छः षत्वं वक्तव्यम । अननुवर्तमाने छः शत्वे शान्तत्वादेव षत्वे छग्रहणान्न कर्तव्यम्भवतीति एवं हि वदता भाष्यकारेणोक्तानां यङ्लुङ् नास्ति इत्युक्तम । अन्यथा ईडभावपक्षे देदेति देद्योतीति ऊठ्भावाभावाभ्यां रूपे विशेषस्य स्पष्टतया एतावानेवेत्येवकारो विरुध्येत ( इति यङ्लुगन्तस्य)

( अभिव्यक्तत्वेनेति ) "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः शास्त्रार्थस्तेषु कर्तव्य उक्तेषु न तदुक्तिष्विति" भाष्यादिति भावः । ( पथीनतीति ) हलन्तेभ्य आचारक्विबभावादिदमयुक्तम ॥ किञ्च इन्हन्निति नियमेन दीर्घाप्राप्तेः पाथिनतीत्येवेति बोध्यम ॥ ( उपसर्गसमानाकारेति ) संग्रामशब्दघटकसंशब्दस्य क्रियायोगाभावेनोपसर्गत्वाभावाज्ज्ञापकानुपपत्तिरिति समानाकारत्वम उपसर्गस्यापि प्रयोगभेदेन समानाकारत्वम । अन्यत्सर्वं सुगमम॥(दारदयतीति ) दरदोऽपत्यं स्त्री दरद्कम्बोजगमधेत्यणोऽतश्चेति स्त्रियां लुक्, ततः पुम्वद्भावेनाणा आनयनाद् वृद्धिः पुम्वद्भावाभावे दरदयतीति स्यात॥(एतयतीति) न चोपदिश्यमानकार्य्याणामुत्पत्तिदेशस्यैव स्वीकारात्परत्वाट्टिलोपः स्यादिति वाच्यम, पुम्वत्त्वातिदेशसामर्थ्याद्धस्याद् इत्यस्यान्तरङ्गत्वादेतयतीति भाष्योदाहरणाच्च टेरित्यस्याप्रवृत्तेरिति दिक् ॥ (अन्यथासिद्धिपरत्वादिति) वृत्तिकर्ता प्रकृत्यैकाजिति सूत्रस्य प्रेयान्

प्रेष्ठ इत्याद्युदाहरणान्दत्तम् तत्र प्रकृतिभावाभ्रिनापि प्रस्थाद्यादेशावि-धायकशास्त्रस्यासिद्धवदत्रेत्यनेनासिद्धत्वात् प्रस्थादावकारोच्चारणाच्च लोपाभावो भाष्ये साधितः। स्रग्विन् स्रजिष्ठ इत्यादावपि लोपापवादस्य विन्मतोर्लुकः प्रवृत्त्या टिलोपो नेति दिक् ॥(टेरित्यस्यैवेति)इदं चिन्त्यम् प्रकृत्यैकाजिति सूत्रे नैकाजित्येव सिद्धे प्रकृतिग्रहणेन येन नेति न्याया-प्रवृत्तिज्ञापनान्नस्तद्धित इत्यस्यापि प्रकृतिभावे श्वानयतीत्येव । किंच सत्यपि टिलोपे सम्प्रसारणन्दुर्लभं श्वयुवेति शास्त्रस्य श्रूयमाणान्नन्ते एव प्रवृत्तेरिति दिक् ॥ (शुनयतीति) न चात्र सम्प्रसारणे कृते वार्णा-दाङ्गमिति परिभाषया पूर्वरूपस्याधि वा टिलोपे रूपसिद्धिरिति वाच्यम्, शुश्रुवतुरिति भाष्योदाहरणेन पूर्वरूपविषये तन्न्यायाप्रवृत्ति-ज्ञापनादिति दिक् ॥ ( आहुरिति ) इदमत्रारुचिबीजम्, भाष्यमते टेरित्यपेक्षया नस्तद्धित इत्यस्यैव परत्वात् किंच केवलाद् गुणवचने-नेष्ठनोऽभावे ब्रह्मवच्छब्दादेवेष्ठनो विधाने मतुपो लुगुत्तरन्टेरित्यस्या-प्राप्तौ नस्तद्धित इत्यस्यैव प्रवृत्तेर्दृष्टत्वादिति दिक् ॥ ( नेत्येके इति ) इदमत्राकूतम् टिलोपेनासो लोपे सम्प्रसारणाप्राप्ते अङ्गवृत्तिपरिभाषो-पन्यासो वृथा तस्या असत्त्वाच्चेति ॥ ( अन्ये इति ) पूर्ववदेवारुचि-बीजम्, एवञ्च विद्ध्यतीत्येव रूपम् । ( उदीचयतीति ) उद् उपसर्ग-त्वेन पृथक्करणादेकाच्त्वात्प्रकृतिभावः ।तिरायतीत्यत्र तिरसोऽनुप-सर्गत्वेन पृथक्करणाभावेनैकाच्त्वाभावात्प्रकृतिभावाप्राप्तेष्टिलोपः । ( चिणो लुङ्न्यायेनेति ) अपाचितरामित्यादौ प्रथमलोपस्यासिद्ध-त्वात्पुनस्तलोपाभाववदिति भावः ॥ इति नामधातुः ॥ * ॥ ॥

( अपाकिरति कुसुममिति ) इहालेखनाभावात्सुडभावः स्त्रियमाणो वृषभः पादैर्भुवमपकिरतीत्यत्र हर्षाद्यभावादप्राप्तिः ॥ ( नेष्यते इति ) अत एव भाष्ये ससुट्कान्येवोदाहरणानि दृश्यन्ते गजोऽपकिरतीति स्वभावाख्यानमत्र । अपरिस्पन्दनसाधनसाध्याः कर्तृस्थभावकाः सपरिस्पन्दनसाधनसाध्याः कर्तृस्थक्रियाः । पश्यन्तीत्यादिना निवृत्त-

प्रेषणप्रक्रियां व्युत्पाद्य अभ्यारोपितप्रेषणक्रियायामाह ( यद्वेति हेतुत्वारोपादिति ) अत्रापि सौकर्य्यविवक्षैव बीजम् । प्रेषणांशत्यागेन प्रेषणान्तरारोपेणापि सौकर्य्यप्रतीतेरनुभवसिद्धत्वादिति भावः ॥ ( अर्थः प्राग्वदिति ) उदाहरणीभूतयोश्चरमकक्षयोः पक्षद्वयेन प्रेषणांशभानाभावादिति भावः ॥ ( आधिक्यादिति ) अस्मिन्पक्षे णौ चेत्सा क्रियेत्यनेनाधिक्यमात्रं व्यवच्छिद्यते न तु न्यूनत्वमपि अन्यथा तृतीयकक्षायामपि न स्यात् प्रकृत्युपात्तप्रेषणांशत्यागेन न्यूनताध्रौव्यादिति भावः । अन्यत्सर्वं सुगममिति दिक् ॥ ( इत्यात्मनेपदम् )

( कर्त्तेव यः कर्त्तेति ) ननु पदार्थतावच्छेदकभेदाभावाद् घटो घट इतिवत्कथं शाब्दबोध इति चेन्न, एकश्च कर्तृशब्दः कर्त्रतिरिक्ताभावपरः स्वतन्त्रपरो वा एकश्च व्यापाराश्रयपरस्तथा च स्वतन्त्राभिन्नव्यापाराश्रय इत्यर्थे पदार्थतावच्छेदकभेदान्न दोष इति बोध्यम् ( इति परस्मैपदम् ) ॥ * ॥ * ॥

( सामानाधिकरण्याभावादिति ) असत्त्वभूतक्रियायाः सत्त्वार्थकयुष्मदस्मदादिसामानाधिकरण्यासंभवादिति भावः ॥ ( असत्त्वभूतत्वेनेति ) तत्त्वं च लिङ्गाद्यनन्वयित्वं सर्वनामपरामर्शायोग्यत्वं वा ॥ ( औत्सर्गिकत्वेनेति ) द्विबह्वोर्द्विवचनबहुवचने एकवचनमिति भाष्योक्तन्यासे एकवचनमित्यस्याप्राप्तप्रापकत्वेनौत्सर्गिकत्वं बोध्यम् वस्तुतस्तु एका क्रियेति भाष्यात्क्रियायामेकत्वमस्त्येव तस्य च प्रकृत्यर्थेऽन्वयादेकवचनम् द्वित्वादिकन्तु स्वोत्तरतिङ्वाच्यकारकगतं तत्रारोप्यते इति कर्तृकर्म्मतिङ्क्षु द्विवचनादि सिद्ध्यति तस्याप्यन्वयः प्रकृत्यर्थ एव यथा हलशायिकाः शय्यन्ते उष्ट्रासिका आस्यन्ते इत्यादौ हलशयनसदृशानि शयनानीत्याद्यर्थके उपमाने बहुत्वोपादानसामर्थ्येनोपमेये तिङर्थक्रियारूपे उपमानगतबहुत्वारोपेण बहुवचनं तद्वदिति दिक् ॥ नन्वार्धधातुकेति विषयसप्तमी तेनान्तरङ्गत्वाच्चिणवद्भावात्पूर्वं वधादेशः कुतो नेत्यत आह ( आशीर्लिङि वधादेशस्येति )

अपवाद इति चिरवद्भाववाक्यार्थबोधकाले सीयुटा सह हन्तेरपि सम्बन्धसत्त्वेन निरवकाशत्वात्तस्यापवादत्वम्, भाष्ये तु वधिभावात्सीयुटि चिरणत्वं विप्रतिषेधेनेत्युक्तम् एवञ्चापवादत्वोपवर्णनं निर्युक्तिकमिति दिक् ॥ ननु चिरवद्भावेन चिणि दृष्टं यत्कार्य्यं तद्विधीयते एवञ्चावधीदित्यादौ चिणि वधादेशस्य दृष्टतया अत्रापि तदतिदेशेन भाव्यमत आह ( न चेत्यादि आङ्गस्यैवेति ) चिण्निमित्तकं यदङ्गसम्बन्धि कार्य्यन्तदेव भवति अवधीत्यादौ चिण्निमित्तको वधादेशो नेत्याशयः। अत्र च लक्ष्यानुसारिव्याख्यानमेव शरणमिति बोध्यम् ॥ ननु ह्रस्वपदानुवृत्त्या तद्विकल्पविधानेन सिद्धे चिण्णमुलोरिति सूत्रे दीर्घग्रहणं व्यर्थमित्याशयेनाह ( प्रकृतो मितामिति न स्थानिवदिति ) न पदान्तेति निषेधात् आभीयासिद्धत्वमपि न समानाश्रयत्वाभावात् ( भाष्ये त्विति ) न पदान्तसूत्रे दीर्घविधेः प्रतिदीव्न इत्युदाहरणदानेन त्रैपादिकदीर्घस्यैव ग्रहणात्तत्प्रत्याख्यानमुचितमिति प्राचीनाशयः। ननु भाष्यमते कथं णयन्तानां सिद्धिरत आह ( णाविताति ) नवीनमते तु नपदान्तसूत्रेऽस्यापि दीर्घस्य ग्रहणमावश्यकम् अनेन ह्रस्वस्यैव विधाने घटादिपठितहेडधेर्णिचि अहिडि अहीडीति रूपासिद्धेः। एवं णयन्तानां रूपसिद्ध्यर्थं दीर्घग्रहणमावश्यकम् आकृतिनिर्देशोऽपि न युक्तिकर इति प्राङ् निरूपितमेवेति दिक् ( इति भावकर्म्मप्रक्रिया ) ॥ * ॥ * ॥

( यदा सौकर्य्येति ) सुखेन कर्त्तुं योग्य इति सुकरः सुकरस्य भावः सौकर्य्यम् ॥ ( न विवक्ष्यते इति ) सौकर्य्यबोधनार्थं तत्कारकव्यापारस्यैव प्रधानधात्वर्थत्वेन विवक्षणात्कारकान्तराणामपि स्वीयव्यापाराश्रयत्वेन कर्तृत्वादिति भावः ( प्रायेणाकर्म्मका इति ) व्यापारव्यधिकरणफलाश्रयस्याभावादकर्म्मकत्वम् द्विकर्म्मकाणां कर्मणः कर्तृत्वविवक्षायामपि सकर्म्मकत्वाभिप्रायेणेत्युक्तम् ( तेन यगात्मनेपदेति ) ननु कार्यातिदेशेऽपि अतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति भाष्यसिद्धान्तेन परत्वात्परस्मैपदादयः स्युरिति चेन्न,

न दुहस्नुनमामित्यादि सामर्थ्येन परस्यापि बाधादिति दिक् ॥ (द्वितीयास्थादेशेति) कार्य्यातिदेशोऽतिदेशः देश एव देश इति परमप्राचीनमते द्वितीयायाः परत्वात्, तन्मूलमिदम्, सिद्धान्तमते तु परत्वात्तृतीयैवेति शंकालेशोऽपि नेति बोध्यम्। ननु कर्त्तरि लकारे अस्मादतिदेशात्तृतीया कुतो नेति चेन्न, न दुहस्नुनमामित्यादि सामर्थ्येन परस्मैपदे विधीयमानानां शबादीनां परस्मैपदानां च बाधेऽपि प्रथमाबाधे मानाभावात् ( द्विलकारकादिति) व्यत्ययो बहुलं लिङ्याशिष्यामिति संहितया पाठे अनुस्वारपरसवर्णनिष्पन्नलशब्दो लुप्तषष्ठ्यन्त इति भावः॥ ननु तुल्यत्वव्यवहारस्य भिन्नव्यक्ताविव दृष्टतया प्रकृतप्रयोगे कथं कर्म्मवद्भाव इत्याशयेनाशङ्कते (ननु पचिभिद्योरिति,औपाधिकभेदमाश्रित्येति) नीलघटाद्भिन्नः पीतघट इत्यत्रेव विशेषणभेदात् भिन्नत्वम् तेन कर्तृत्वसमानाधिकरणा कर्मत्वसमानाधिकरणा च क्रिया भिन्नैवेति भावः ॥(तुल्यत्वव्यवहार इति)॥ ननु पचत्योदनं देवदत्त इत्यत्रोदनकर्म्मणो राध्यत्योदन इत्यत्र कर्तृत्वेन कर्म्मवद्भावः कुतो नेति चेदत्र प्रत्यासत्त्या समानधातौ कर्म्मस्थक्रियया तुल्यक्रियत्वाश्रयणादिति दिक् ॥(कर्म्मणेति किमिति)। अयं भावः कर्म्मणेति सत्त्वे सामर्थ्याद् दृश्यमानकर्मनिष्ठविशेषप्रयोजककर्म्मस्थक्रियाया ग्रहणात् साध्वसिरित्यादौ न दोषः, तदभावे असिस्थाल्योर्व्यापारसत्त्वेन क्रियया तुल्यक्रियत्वमक्षतमेवेति । ननु धातोरेकाच इत्यतो धातोरित्यनुवर्त्य धातोर्वाच्यया क्रियया तुल्यक्रिय इत्यर्थे करणत्वाद्यवस्थायामसिस्थाल्योर्व्यापारसत्त्वेऽपि धातुवाच्यत्वाभावान्न दोष इत्यत आह ( क्रियेति ) गच्छति ग्राम इत्यादौ गम्यमानग्रामादिकर्म्मनिष्ठविशेषप्रयोजककर्म्मस्थक्रियायां अभावात् कर्तृस्थक्रियत्वमिति भावः ॥ ( सकर्म्मकाणां प्रतिषेध इति ) सोकर्यविवक्षाया अभावेऽपि प्राप्तकर्म्मवद्भावनिषेधार्थमिदम्, तेन पच्यते ओदन इत्यादौ न दोषः ( अन्योऽन्यं स्पृशत इति) शब्दभेदेन कर्तृत्वकर्म्मत्वसत्त्वादेकस्मिन्कर्तरि यैव संयोगानुकूलक्रिया सैवापरस्मिन्कर्तरीति

कर्म्मस्थक्रियया तुल्यक्रियत्वमत्ततमेव आश्रयभेदाद्भेदेन वा तुल्यत्वम् न च स्पर्शस्य कर्तृस्थत्वात्कथमस्य प्रवृत्तिरिति वाच्यम्, अन्योन्य-संयोगप्रयुक्तहर्षादिजनितरोमाञ्चादेर्विशेषस्य कर्म्मनिष्ठत्वात् ( अजामिति ) अत्र कर्मणि गमनानुकूलव्यापाररूपेणाजानिष्ठफलेन नेतृव्यापारेण वा विशेषादर्शनादिदं चिन्त्यमिति केचित् । गमिसंयोगस्तु न तथा ग्रामं गच्छतीत्यादौ ग्रामेपि पुरुषसंयोगरूपविशेषदर्शनाद्धर्म्यधस्यापि कर्म्मस्थत्वापत्तेरिति दिक् (वृत्त्यनुसारिण इति) अयमाशयः उपवासादि तपस्तापसं तपति दुःखयतीत्यर्थे तापसस्य कर्मत्वम्, तापसस्तपस्तप्यते अर्जयतीत्यर्थे तापसस्य कर्तृत्वम्, एवं च क्रियाभेदात्सकर्म्मकत्वाच्चाप्राप्ते विधिरिति।भाष्ये तु सकर्म्मकाणां प्रतिषेधो वक्तव्य इत्यस्य प्रत्याख्यानाय एवकारसामर्थ्यात्तपेरेव सकर्म्मकस्य नान्यस्येति नियमार्थत्वमिति दिक् ( कर्म्मकर्तृप्रक्रिया समाप्तेति शम )।

# अथ कृदन्तप्रकरणम्

शङ्करस्प्रणिपत्याथ हरिशंकरशर्म्मणा ।
फक्किकामर्मविवृतेः कृदन्तं च वितन्यते ॥ १ ॥

( शतेन वर्येति ) शतशब्दोत्रानियतपरः कन्याया वरणे वरयितॄणा नियमो नास्तीति भावः (वृत्त्यान्येति) न च एतिस्तुशास्त्विति सूत्रे वृणो ग्रहणस्य वक्ष्यमाणत्वात्, अत्र च वृङो ग्रहणादिति प्रत्युदाहरणासंगतामिति वाच्यम्, सूत्रे अनिरोधग्रहणसत्त्वे शब्दसामर्थ्यात्संभक्तिरूपार्थकस्यैव वृङो ग्रहणं तदनुक्तौ तु विनिगमनाविरहादुभयोर्ग्रहणापत्तेः। एतिस्तुशास्त्विति सूत्रे वृग्रहणस्य पुंसि चारितार्थ्यात्। अत्र तु अवद्येत्याद्यविभक्तिकान्तनिर्देशेन स्त्रियामेव विधानात् । अत एव पुंसि वार्या ऋत्विज इत्युक्तम्, सुग्रीवो मम वर्य्योसावित्यादि कविप्रयोगस्तु सूत्रे द्वन्द्वनिर्देशाभिप्रायेणेति दिक् ( ह्रस्वः सुपठ इति ) सूत्रे ये विभाषे-

त्यात्त्वबाधनार्थं प्रश्लेषेण इकारद्वयपाठः,अन्यथा ये विभाषेत्यस्य ये इति विषयसप्तम्याऽन्तरंगत्वम,ईत्वस्य क्यपा सह विधानेन बहिरङ्गत्वमि त्यात्वं स्यात्। भाष्ये तु क्यपा सहविधानादस्यैवान्तरङ्गत्वम,ये इति परसप्तमीत्याश्रित्य दीर्घं प्रत्याख्यातम्। न च पत्वतुकोरसिद्ध इत्यनेनासिद्धत्वात्तुगापत्तिरिति वाच्यम, पदान्तपदाद्योरेकादेशोऽसिद्ध इति सिद्धान्तात्। अन्यथा वृत्ते छत्रमित्यत्र ह्रस्वाश्रयतुगापत्तेः। इष्यते तु वैकल्पिक इति मनोरमाकारः। वस्तुतस्तु विषयसप्तमीस्वीकारेपि जनादिमाहचर्येण यादिप्रत्ययोत्पत्तिपूर्वकालेनान्तस्यैवात्वविधानेनात्र तदप्राप्त्या नस्येत्त्वे आद्गुणेन रूपसिद्धेरिति, एतत्क्लेशपरिहारायैव दीर्घोच्चारणमिति दिक् (यथोत्तरं मुनीनामिति) सूत्रदूषणाय वार्तिकस्य प्रवृत्तत्वात्। भाष्ये च वार्तिकमते शोक इत्यस्यासिद्धिमाशंक्य सूत्रमतेपि गयति कुत्वबारणाय नियमार्थमावश्यकेन शुचेर्घञीति वचनेन समाधानाद्वार्तिकमतस्य वाभ्यनुज्ञानाच्चेति भावः ( हरदत्त इति ) अत्राह्यचिचीत्रन्तु टिड्ढेति सूत्रे टिदाद्यवयवाकारस्यैव ग्रहणं भाष्यप्रामाण्यात, टित्वसामर्थ्यादिति चेद्धयेत्यत्राप्यापत्तेः। कथन्तर्हि स्तनंधयीति चेत् गौरादित्वेनेति गृहाण स्वरकृतविशेषोपि न अनुदात्तस्य च यत्रोदात्तलोप इत्युदात्तनिवृत्तिस्वरविधानादिति दिक् ( ब्रह्मज्य- इति ) न च कप्रत्यये आकारलोपेनेदं सिद्धमिति वाच्यम, तथा सति संप्रसारणे इयङादेशे च जिय इति स्यात्। एरनेकाच इति यण् तु नाशंक्यः अंगस्यैकाच्त्वात्, ज्याधातोरेव प्रत्ययविधानात्। न च कर्मण्यधिकारे अकर्मकाज्ज्याधातोः कथं विधानमिति वाच्यम्,वचनसामर्थ्यात्। किं च ब्रह्म प्राप्तुं जिनातीत्यर्थात् वस्तुतस्तु अकर्मकेषु सुपीत्यस्यैव सम्बन्ध इत्युक्तत्वादिति दिक् ( आढ्यीकुर्वन्त्यनेनेति ) ननु ख्युनोऽभावेपि करणाधिकरणयोरिति स्यादिति चेत् ल्युट्ख्युनोस्तुल्यत्वात्। न च ख्युनि मुमह्रस्वौ स्यातामिति वाच्यम, च्व्यन्तस्य निपातत्वेनाव्ययत्वात्, न च ख्युनि उपपदसमास इति वाच्यम, ल्युट्यपि नित्यस्य गतिसमासस्य संभवात्। न च स्त्रियां ङीप्टाभ्यां विशेष

इति वाच्यम् ख्युन्यपि नप्स्नयीति ङीपो विधानादिति संक्षेपः (एतच्च भाष्यविरोधादुपेक्ष्यमिति) उक्तं हि भाष्ये सुपीत्यनुवर्तमाने पुन सुब्ग्रहणमनुपसर्ग इत्येत्र मा भूत् सुप्मात्रे यथा स्यात् उदासारिण्यः प्रत्यासारिण्यं इति ( भाष्यकारवचनादिति ) यथा प्रष्ठादयः शब्दाः परित्यक्तस्वलिङ्गाः स्त्रियां वर्तन्त एवमिह श्रीशब्दः परित्यक्तस्वलिंगः सन् कुले वर्तते इति तत्र ह्रस्वो नपुंसक इति ह्रस्वः मुमत्र न अपवादेनामा बाधात् । स्वमोर्नपुंसकादित्यमो लुक् । न चैवमपि गां मन्य इत्यादावपि सुपो धात्विति लुक् स्यादिति वाच्यम् । अभिधानसामर्थ्यादेव तद्बाधात् । वस्तुतस्तु स्वमोरिति लुगत्र न बाध्यसामान्यचिन्तया सुपो धात्विति लुग्वत् अस्यापि अभिधानसामर्थ्येन बाधात् । किंचास्यामो बहिरंगतया न लुक् तस्माच्छ्रियं मन्य इत्येव भाष्यसम्मतमिति भट्टा इति दिक् ( चतुर्विध इति ) ब्रह्मादिषूपपदेषु भूते वर्तमानाद्धन्ते क्विबिति सूत्रार्थे विनिगमनाविरहाच्चतुर्ष्वपि एवकारसंबन्धः तत्र ब्रह्मादिष्वेव भूतार्थाद्धन्तेरिति प्रकृतिनियमे अरीन् हन्ति हनिष्यति वेति अरिहा इति सिद्धिः भूतार्थे चासिद्धिः फलम् ब्रह्मादिषु भूतार्थादेव हन्तेरिति प्रत्ययनियमे वर्तमानभविष्यत्कालयोः पूर्वप्रयोगसिद्धिः ब्रह्मादिषु भूतार्थाद्धन्तेरेवेत्युपपदनियमे वृत्रं जयति जेष्यतीति वृत्रजिदित्यस्य सिद्धिः । वृत्रं जितवानिति भूते प्रयोगाभावः । ब्रह्मादिषु भूतार्थाद्धन्तेः क्विबेवेति कालनियमे भूतेऽपि पितृव्यं हतवान् पितृव्यघातीत्यत्र प्रत्ययान्तरासिद्धिः नियमफलं ब्रह्मघातीति प्रयोगाभाव इति भावः ( भाष्यमिति ) उभयतो नियमोऽयम् । ब्रह्मादिष्वेव क्विबेवेति चेति युक्ततरं चैतत् श्रुत्योपस्थितयोरुपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधातुकालयोरेवोपरोधो न्याय्यः । एवं चैतद्विरोधात्पूर्वोक्तमतमन्याय्यमिति सर्वत्र बोध्यम् । ननु धृषेरादित्वाद्विभाषाभावादिकर्मणोरिति विकल्पे प्राप्ते तदंशे नित्यार्थ एव कस्मान्नेत्यत आह (भात्रादीति) नास्तीति अनभिधानादिति भावः । अनभिधाने प्रमाणमाह (अत एवेति) तेन भावादिकर्म-

भ्यामन्यत्र वैजात्याभावेऽपि आदितश्चेति निषेधो न (हरदत्त इति अवैजात्ये भावादिकर्मणोरनभिधानाद्वैजात्ये च नियमादादित्वफलं चिन्त्यमिति भावः अनभिधाने प्रमाणाभावाद्दादित्वं सफलमित्याशयेनाह (माधवस्त्विति ) इति फक्किकामर्मविवृतौ पूर्वार्द्ध-कृदन्तं समाप्तम् ॥ * ॥ * ॥ * ॥ * ॥

ननूभयोर्द्धात्वर्थयोः कषणरूपतया प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदाभावेन घटो घट इतिवद्भेदान्वयो न स्यादत आह एकस्यापि धात्वर्थस्येति । तथा च निमूलविशिष्टकषणाभिन्नकषण इत्यादिबोधे घटो नीलघट इतिवद्विशेषणसम्बन्धभेदेन भेदादभेदान्वयोपपत्तिरिति दिक् । ननु हिंसार्थानां च समानकर्मकाणामित्यनेनैव सिद्धे करणे हन इति सूत्रं किमर्थमित्यत आह (यथाविध्यनुप्रयोगार्थ इति ) तेन णमुण्विधाने हि तृतीयाप्रभृतीन्यन्यतरस्यामित्यनेन विकल्पसमासापत्तेः भिन्नधातुसम्बन्धे एव तेन विधानाच्चेति भावः । ननु मूलकेनोपदश्य भुंक्ते इत्यर्थे मूलकस्य भुंजि प्रति करणत्वेन उपदंशिना सहासामर्थ्यात्कथं प्रत्ययः समासश्चेत्यत आह (यद्यप्युपदंशिना सहेति आर्योऽस्त्ययेवेति ) मूलकेन भुंक्ते किं कृत्वा उपदश्य किमुपदश्य अर्थान्मूलकमित्यर्थे कर्मतयान्वयेन सामर्थ्यम् यदि हि तृतीयान्तेन शाब्देऽन्वये सत्येव प्रत्ययः समासश्च भवेत्तर्हि तयोर्वैयर्थ्यं स्पष्टमेवेति दिक् ॥ इत्युत्तरकृदन्तम् ॥ * ॥ * ॥

ग्रहात्तिवस्विन्दुशके तपस्ये भौमे सिते शंभुतिथौ कृदन्तम् ।
समाप्तिमागाच्छिवभावनातः कृतिर्मम स्यात्सुखदा सुहृद्भ्यः ॥

बुद्धिनाथतनूजन्मा दिगम्बर इति स्मृतः ।
तत्तनूजस्य विदुषो हरिशङ्करशर्म्मणः ॥ * ॥

इति फक्किकामर्मविवृतिः समाप्ता

160

# ॥ शुद्ध्यशुद्धी ॥

| पृष्ठांक | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | १ | रोच्छ्वल | रोच्छल |
| ४ | ९ | कत्वेन | कत्वे न |
| ७ | ८ | सिद्धत्वा | सिद्धत्वा |
| ७ | २५ | प्रागेव तस्या | प्रागेतस्या |
| ९ | १ | त्यत | त्यतः |
| १० | १२ | प्राप्ते | प्राप्तेः |
| ११ | ३ | त्रास्ते | त्रास्तेः |
| ११ | २३ | पेऽचिति | पेऽचि |
| १३ | १ | तर्थाहि | तथाहि |
| १४ | १ | स्यान्त्वेन आ | स्यासत्वेन अ |
| १४ | १५ | त्यादो | त्याद्यौ |
| १४ | २४ | नितिक्ता | तिरिक्ता |
| १५ | ९ | ऋत्यक् | ऋत्यक |
| १७ | १ | स्यथ | स्यर्थ |
| २१ | १० | यत्व | यस्व |
| २४ | १२ | असंत्नु | संनु |
| २४ | २३ | स्या | स्याः |
| २५ | ३ | श्रण | श्रयण |
| २७ | १९ | भावद्ध | भावाद्ध |
| २८ | १४ | जयन्ती | जयती |
| २९ | २७ | कत्वात् | सत्वात् |
| ३० | ७ | च्स | च्प्रस |
| ३२ | १० | सिने | सिनि |
| ,, | २६ | तनु | ननु |
| ३३ | १४ | त्वा | त्व |
| ३४ | २५ | तोऽत्र | नोऽत्र |
| ३५ | १ | विगर्भ | विमर्श |
| ३६ | ११ | त्त्रने यणादेश | त्त्रेन यणादेशः |
| ३७ | ९ | नं प्रा | नमप्रा |
| ,, | ११ | प्यस्या | प्यस्य |

| पृष्ठांक | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३८ | ९ | वत्व | वत्वा |
| ३९ | ५ | दीर्घः | दीर्घे |
| ४० | २२ | स्यार्पि | स्यापि |
| ४१ | ११ | मांस | मांस |
| ४२ | २७ | वच् | विच् |
| ४३ | २१ | ननु | नच |
| ४४ | २५ | धानं | धाने |
| ४५ | १० | मत्र | स्यात्र |
| ४६ | ३ | मिपि | मित्यपि |
| ,, | ,, | तथाति | तथासति |
| ५१ | १ | क्तन्ता | क्तन्त |
| ५२ | २१ | सर्पि | सर्पो |
| ५७ | ७ | निवृत्तं | निर्वृत्तं |
| ,, | १२ | गोन | गो न |
| ५८ | ७ | वखट्वेति | खट्वेति |
| ६० | २४ | नत्व | नन्व |
| ६१ | २५ | डलू | डलौ |
| ६३ | १६ | त्यस्य | त्यस्या |
| ६५ | २० | राज | राजा |
| ६७ | ११ | उत्तरदेशसंयोगाश्रय | संयोगाश्रय |
| ६७ | २२ | व्याद्या | व्यद्या |
| ६८ | ५ | तु मु | तुमु |
| ,, | २५ | क्लृप्त्य | क्लिस्य |
| ७२ | १२ | प्रत्यय | प्रत्यये |
| ,, | २२ | वधा | बन्धा |
| ७५ | २६ | यात्किंचि | यत्किंचि |
| ७८ | ७ | तत् | तत्र |
| ,, | १२ | समीपमुपश्लेपि | समीपमुपश्लेष-स्तत्कृतमुपश्लेषि |
| ८० | ६ | संभात् | संभवात् |
| ८२ | १८ | वत्या | वत्वा |
| ,, | २५ | रार्थाभेदेन | रार्थो भेदेन |

## शुद्ध्यशुद्धी ।

| पृष्ठांक | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ८३ | ३ | ह्यादे | ह्लादे |
| ८३ | ६ | अश्वा | अंश्वा |
| ८६ | २ | पया | पयां |
| ८७ | ३ | गता | गला |
| ” | ६ | दितिरि | दिरिति |
| ” | १६ | सूत्रे | सूत्रं |
| ८८ | १७ | तने | तेने |
| ८९ | २ | णोद | णादे |
| ९१ | ९ | त्सती | त्सतीति |
| ” | १२ | नत्वे | नन्वे |
| ९२ | ८ | येन | येन न |
| ९३ | ३ | स्यांजि | स्याञ्जि |
| ” | १७ | ङ्कवत्त | ङ्ग च त |
| ९४ | १३ | र्घान्ता | र्घान्न |
| ” | १४ | ह् | दृ |
| ९५ | ११ | ननु न | ननून |
| ९६ | २१ | कृत्योः | कृतयोः |
| ९७ | ६ | त्याया | त्यया |
| ” | १३ | शब्देन | शब्दे न |
| ” | १६ | भीति | क्षीति |
| ” | २४ | वतीती | वीति |
| ९८ | ११ | वत्वे | पत्वे |
| ” | २३ | देय | दय |
| ९९ | १२ | परत्वात् | परत्वम् |
| ” | १३ | दाब्दे | ब्दादे |
| १०० | २४ | दन | दान |
| १०१ | ५ | धीदित्या | धीत्या |
| १०३ | ७ | थस्य | र्थस्य |
| १०३ | १६ | तृणा | तृणां |

—*—




# सूचना ।

अयि पाठकाः पाणिनीयाः ! पूर्वम्मुद्रिताऽपीयम्मुद्रणादिदोषेण पाठकानाम्मनोरञ्जनी न जाता, अतो यथामति स्खलनपरिहारेण पुनर्मुद्रापिता, सम्भावयामि चेदानीमियञ्छात्राणामतीव मनोरञ्जनी भूत्वा मम परिश्रमं सफलीकरिष्यति, छात्रा अपि च एतस्याः पठनपाठनादिव्यवहारेण सुखेन पाणिनीयमहार्णवं समुत्तीर्य विचक्षणा भवेयुः, अस्याश्च सहकारिणी शिशुतोषिणी मुद्रितैवासीत्, तस्याश्च सहचारिणी "न्यायसिद्धान्तमुक्तावलीप्रत्यक्षखण्डविवृतिः" परीक्षायामतीवोपयोगिनी मुद्रणार्थं न्यस्ता अल्पतरकालेनैव प्रकाशिता छात्रान्मोदयिष्यतीति किमधिकेन ।

निवेदयिता—हरिशङ्करशर्मा